# अभिनवा पाठावलिः

द्वितीया



मास्तर ऑफ् आर्त' इति 'सेकंडरी ट्रेनिंग कॉलेज डिप्लोमा' इति च
उपपदद्वयसमलङ्कृतेन मुम्बापुरस्थ 'सेकंडरी ट्रेनिंग कॉलेजा' भिधे
राजकीय विद्यापीठे प्रधानसंस्कृताध्यापकपदधारिणा
**बोकील**कुलोत्पन्नेन **पांडुरंग**पुत्रेण **विनायक**शर्मणा
विरचिता



**मॅक्मिलन ॲण्ड कंपनी, लिमिटेड**
२७६ डॉ. दादाभाई नौरोजी रोड, मुंबई

 १९५५ [ सपादरूप्यकः

MACMILLAN AND COMPANY LIMITED
*London Bombay Calcutta Madras Melbourne*

THE MACMILLAN COMPANY OF CANADA LIMITED
*Toronto*

ST MARTIN'S PRESS INC
*New York*



*First Edition 1928; Second Edition 1929; Reprinted 1931, (twice), 1934; Third Edition 1937; Reprinted 1941, 1945, 1947, 1950, 1952, 1955.*

MADE IN INDIA

Printed by Laxmibai Narayan Chaudhari at the Nirnaya Sagar Pr 26–28, Kolbhat Street, Bombay 2, and Published by J. H. Collins Messrs. Macmillan & Co., Ltd., 276 Dr. Dadabhai Naoroji Road, F Bombay 1.

# PREFACE

the Second Book of the series that has been
o be written under the title of "New Sanskrit
ıd it is intended for second year in Sanskrit
IX in Secondary Schools. Personal experience
guide in putting together the subject-matter
, which will be found to be sufficient in
suitable in quality for the class for which
l. The pupils who have been trained on the
First Book are expected to read this book
nd interest. The stories, the biographical
dialogues, the poems and the letters have
sen as to supply a variety of material for
language in these lessons is increasingly
that after finishing this book the pupils may
es in a position to read extracts from real
sics and to understand them with a little
teacher.

cises at the end of the lessons suggest the
followed. Trained teachers should use the
method, while the untrained ones may
lessons and add a little conversation to
either case reading and reciting aloud
ght with special attention to pronunciation
. The pupils should be drilled in the use of
d phrases appearing in the lessons, and the
not only solve the exercises but add some
wn. The pupil's vocabulary also has to be
this can be done successfully with the
onyms,' 'synonyms,' 'opposites,' 'words-of-

the-same-family', 'derivatives', etc. Appreciation of the characters in prose lessons and of the style and thought in poetry is very important. Pupils should be gradually led to it by discussions which may go on in the vernacular. A certain amount of grammar can be effectively taught in the application steps of the lessons: e. g. simple compounds, numerals, participles and indeclinables. Such drill always pays, and the teacher should spare no pains in getting this sort of ground work thoroughly learnt.

The grammar lessons at the end of the book cover the portion in the first twelve lessons of Dr. Bhandarkar's Book II. They should be taught inductively and in association with literature as far as possible. Pupils must learn by heart the ready-made forms of nouns, pronouns and roots, but not the rules that govern their formation. They will, however, be expected to analyse a particular inflexion and to show the stages through which it has passed. When the conversational method is recommended, it is not intended that grammar should be neglected; on the other hand, it is suggested that the Pathshala method of reciting forms in chorus in a singl song fashion should be followed.

Second-year pupils can now be expected to do some simple exercises in composition; for, by this time they will have had enough practice in sentence-building to enable them to put together a few simple sentences in a connected manner. At first, they may be asked to reproduce short stories read from the book itself; then some pictures may be placed before them for description and later short exercises in letter-writing may be set. The teacher should take care that the proper forms of decorum which are considered the real signs of Sanskrit culture

are rightly observed in letter-writing. Translation from English or Vernacular into Sanskrit seems to be unnecessary when our pupils can freely write a few lines in Sanskrit.

Prof. A. B. Gajendragadkar and Pandit Rangacharya Raddi have given much valuable help in preparing this book, and a great deal is owed to the friendly guidance throughout of Principal H. R. Hamley. Thanks are due to these gentlemen; also to the authors of the various books which had to be consulted; and particularly to Pandit Hemachandra Roy, M. A. of Pabna (Bengal), from whose Pandava-Vijaya Lesson 38 has been extracted.

Bombay
October, 1928 Author

Quotations from the Amarakosha are newly given at the end of several lessons for the pupils to learn; and in the grammar portion many forms are analysed for their clear understanding.

Dhulia Author
24th July, 1937

# अनुक्रमणिका

# प्रथमः पाठः ।

## सङ्घे शक्तिः कलौ युगे ।

पुरा किल कस्मिंश्चिदाश्रमेऽवसत् कोऽपि महर्षिः । सोऽतीव चतुरो बहुश्रुतश्चासीत् । कुशलोऽयमध्यापक इति तस्मिञ्जनपदे सोऽभवत् सर्वेषां पूजास्थानम् । गच्छता कालेन स मुनिर्वृद्धत्व-मापन्नः । तत एकस्मिन् दिने स्वनिधनकालमासन्नं ज्ञात्वा स



आत्मनस्तनयान् समाहूयावदत् । अयि बालकाः, प्रस्थितोऽह-मस्मान्मृत्युलोकाद्देवलोकम् । न केनापि शोचनीयं मे मरणम् ।

ईशकृपया सुखेनैव तनुमेतां त्यक्तुं समर्थोऽस्मि। युष्माभिः पुनरस्मिन्नाश्रमपदे सद्धर्मेण व्यवहर्तव्यम्। न कदापि मतिभेदो जायतां मम पुत्रेषु युष्मासु। उक्तं हि—

संहतिः श्रेयसी पुंसां विगुणेष्वपि बन्धुषु।
तुषैरपि परित्यक्ता न प्ररोहन्ति तण्डुलाः॥ १॥

अपरं च 'संहतिः कार्यसाधिका' इति संप्रत्येव दर्शयामि। इत्युक्त्वा स महर्षिः प्रादिशत् पुत्रान् काष्ठभारमाहर्तुम्। तैस्तथानुष्ठिते सति सोऽभाषत। अयि बालाः, एनं काष्ठभारं खण्डयत यूयमेकैकश इति। तदनुसारेण तैस्त्रिभिः पुत्रैस्तस्य भञ्जने प्रयत्नाः कृताः। किन्तु नैकोऽपि समर्थोऽभवत् तं खण्डयितुम्। ततो भारादुन्मोचितानि काष्ठानि भङ्क्तुं तानाज्ञापयत् स वृद्धः। तदनुरोधात्तानि सर्वाण्यपि काष्ठानि पृथक् पृथग् लीलयैव भग्नानि तैः पुत्रैः। एतदालोक्यासौ मुनिः प्राह पश्यतैनं संहत्याः प्रभावम्। तथैव यावद्यूयं संहतास्तावन्न कोऽपि शत्रुर्युष्माकं विनाशायालम्। परं व्यस्ताश्चेद्यूयं हेलयैव विनश्येत अत एवोपरिनिर्दिष्टं कविवचनं मनसि निधाय सर्वथा व्यवहर्तव्य तदनुरोधेन इत्युपदिश्य पञ्चत्वं गतः स महर्षिः।

**प्रश्नाः**—कथं भवति पुरुषः सर्वेषामादरणीयः? किमुपदिष्टं महर्षिणा? संहतेः फलं कथं दर्शितम्?

**अमरकोषे**—महाकुलकुलीनार्यसभ्यसज्जनसाधवः।
विद्वान् विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः।
धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविः॥
धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः॥

**कथान्तरम्**—अन्यां कामपि कथां कथय यस्यां 'संहतिः कार्यसाधिके' भावो निर्दिश्यते।

शब्दप्रयोगाः—(अलम्)—१. सत्यभाषिणि वयस्ये क्रोधेनालं यतः स एव व्यसने तव रक्षणायालम्।

२. ———— दुर्योधनस्य वधाय ———— नान्यः।

३. बिभीषणो रावणं प्रतिभाषते 'अधुना पापचरितेन ————।
सीतापतिस्तव ———— अलम्। राक्षससेनां संहर्तुं कपिवराः ———।

(भञ्ज्)——१. काष्ठानां —— ते पुत्राः ———— असमर्थाः।
किंतु काष्ठम[illegible]कशस्ते ———— लीलयैव।

२. गदायाः —— दुर्योधनस्योरुः ———— इति कृष्णो भीमं प्रादिशत्।

३. शिवचापस्य —— कर्तुं रावणोऽक्षमः परं रामेण तद्धेलया ———।

# द्वितीयः पाठः।

## कीलोत्पाटी वानरः।

The monkey which pulled out the p

अथैकस्मिन् जनपदे कश्चिद्धनिको गृहं निर्मातुं प्रारभत। तस्मिन् कर्मणि तेन नियुक्ता बहवः कर्मकराः। दारुखण्डने तक्षका भूमिखनने भृतकाः शिलातक्षण आश्मिका भित्तिरचने लेपका इत्यादयः पुरुषा निरता आसन् स्वे स्वे कर्मणि। प्रतिदिनं प्रातः स्वकार्यं ते प्रारभन्त मध्याह्नपर्यन्तं चाविरतं परिश्रममकुर्वत। मध्याह्ने कश्चित्कालं विश्रान्तिमनुभूय भोजनं चासेवन्त। पुनरेव द्विवादनसमये स्वं स्वं व्यापारमारभ्य सूर्यास्त- Two o'cl
पर्यन्तं तमन्वतिष्ठन्। अथैकस्मिन्नुत्सवदिने स्वाद्वन्नं भोक्तुं ते मध्याह्ने गृहमगच्छन् सर्वे कर्मकराः। तदा समीपस्थाद् वृक्षात् तत्रायातं किमपि वानरयूथम्। ततश्च विविधान्युपकरणानि वीक्ष्य ते मर्कटाः सकुतूहलं तान्यस्पृशन्। पर्यैक्षत कश्चन वानरः कुठारं, अन्यः क्रकचं, तृतीयस्तक्षणीं, अपरश्च वेधनीम्।



बालकपयस्तावदुदप्लवन्त काष्ठात् काष्ठं प्रस्तराच्च प्रस्तरम् । यूथपतिः प्लवङ्गवरः पुनरर्धपाटिते दारुखण्डे निवेशितं कीलकं कुतूहलेन पर्यालोचयति स्म । किमिदमत्र निवेशितं किमर्थं च । कुतो वा क्षुद्रोऽयं कीलो मया न चाल्यत इति चिन्तयन् स कपीन्द्रः प्राक्रमत महतावेशेन तं चालयितुम् । तस्येमं पराक्रममनुयायिनो यावदैक्षन्त तावत्सहसेव निर्गतः स कीलः । अर्धपाटिते तस्मिन् दारुखण्डे संपीडितं तस्य लांगूलं चूर्णितं चाभवत् । तदा परमवेदनया स उच्चैराक्रोशत् । अचिराच्च पञ्चत्वं गतः । अन्ये सर्वे वानरास्तेन विभ्रान्ताः पलायिताश्च सत्वरम् । यदा ते कर्मकरास्तत्र न्यवर्तन्त तदा तं मर्कटमुपरतं वीक्ष्य तेऽब्रुवन्—

dead

अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति ।
स तत्र निधनं याति कीलोत्पाटीव वानरः ॥ १ ॥

**प्रश्नाः**—कीदृशः स्वभावो मर्कटानाम्? अपि सर्वदैवानुकरणमनुचितम्? कीदृशमनुकरणं युक्तम्? मर्कटस्य सर्वाणि नामानि कथय।

**अमरकोषे**—१. गृहं गेहोदवसितं वेश्म सद्म निकेतनम्। House
निशान्तपस्त्यसदनं भवनागारमन्दिरम्॥

२. कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः। monkey
मर्कटो वानरः कीशो वनौका इति विश्रुताः॥

**स्वभाववर्णनम्**—१. यूथपतेः स्वभावं वर्णय। २. बालकपेः स्वभावं वर्णय।

**आलेखनम्**—हर्म्यस्य रूपरेखामालिख तस्य भागानां नामानि च कथय।

**साधितानि क्रियाविशेषणानि**—'स्वभावतः' इत्येतादृशानि क्रियाविशेषणानि कथय। तानि पुनर्वाक्येषु प्रयोजय।

# तृतीयः पाठः।

## दर्पान्नाशो नयात्सुखम्।

Pride is destruction humility is happiness

आसीत् कस्मिंश्चिद्वनोद्देशे विस्तीर्णा तृणभूमिः। तत्राचरन् प्रत्यहं बहवोऽजा मेषाश्च। तत्पर्यन्ते स्वादुजलमावहत् काचिन्नदी। तस्या एकस्मात्तटादन्यत्तटं गन्तुं कृत आसीद् दारुफलकेन सेतुः। तस्याधस्ताद् गभीरो जलाशयोऽवर्तत। जनैः सावधानतयैव स सेतुराक्रमितव्यो यतो हस्तमात्र एव स विस्तृत आसीत्। समकाले न द्वौ पशू मनुजौ वा तस्योपरि चलितुं शक्तौ।

अथैकदा कौचिदजौ परस्परविरुद्धां दिशमुद्दिश्य प्रस्थितौ। संमुखमतिष्ठतां च सेतोर्मध्यभागे। कः प्रथमं गमनायालमिति परस्परस्य बलं ज्ञातुमिव तौ मुहूर्तं स्तब्धावास्ताम्। ततस्तयोरेकतरोऽन्यं शृङ्गाभ्यां प्रहर्तुमारभत। तदा स द्वितीयोऽपि

तं तथैव शीर्षाघातैः पृष्ठतः प्रक्षेप्तुमुद्यतोऽभवत् । एवं समुद्भूतः



तयोः कलहः । दृढं प्राहरतां तौ परस्परं शृङ्गाभ्याम् । ततः







सहसैव फलकाद् भ्रष्टौ तयोरेकतरस्य पश्चिमपादौ । तमधः पतन्तं

प्रहरन्नसौ द्वितीयोऽपि सेतोश्च्युतः । एवं द्वावपि तौ छागौ पतितौ निमग्नौ च तस्मिन् गभीरे जले ।

अन्येद्युः किमप्यन्यदजद्वयं तेनैव मार्गेण परस्परविरुद्धां दिशमुद्दिश्य प्रस्थितम् । तावन्योन्यममिलतां सेतुमध्ये । तत्र स्थलाभावं वीक्ष्य तयोरेकतरो महतावधानेन तस्मिन् फलके शनैः शनैरुपाविशत् । ततः स द्वितीयस्तस्य शरीरे मन्दं मन्दं पदानि निधाय पारमगच्छत् । अनन्तरं स प्रथमोऽजः शनैरुत्थायात्मनो मार्गं सुखेनाक्रमत । एवं द्वावपि तौ छागौ नदीतटं क्षेमेण प्राप्नुताम् । विवेको विनयश्च न केवलं जातिमाश्रयतः किन्तु व्यक्तिविशेषमपि ।

**प्रश्नाः**—किं खादन्ति मेषा अजाश्च ? कुत्रारमन्त ते पशवः ? कथं तरणीयो जलप्रवाहः ? कस्मात्कारणान्मृतौ प्रथमावजौ ? किं कृतं द्वितीयेनाजद्वयेन ?

**अमरकोषे**—आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ॥
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशंबरम् ॥

**शब्द-निर्देशः**—(१) कर्मणि-भूतकालवाचकानि, (२) 'तु' मन्तानि धातुसाधितानि, (३) 'क्त्वा' प्रत्ययान्तानि च पूर्वोक्तायां कथायां निर्दिश ।

**अर्थ-निर्णयः**—

| | |
|---|---|
| १. तृणम्— तरणम् । | ५. सेतुः— सुतः । |
| २. कुलम्— कूलम् । | ६. वज्रम्— वर्ज्यम् । |
| ३. दिनम्— दीनम् । | ७. अजौ— आजौ । |
| ४. मुहूर्तम्— मुहुर्मुहुः । | ८. च्युतः— चूतः । |

**वाक्य-रचना**—१. सावधानं सेतुराक्रमितव्यः । हस्तमात्र एव स विस्तृत आसीत् । (एते वाक्ये संयोजय ।)

२. युगपदेव तस्य सेतोरुपरि द्वौ पशू चलितुं न शक्तौ । ('सेतुः' इति पदं कर्तृत्वेन प्रयोजय ।)

३. एकतरोऽजो द्वितीयं शृङ्गाभ्यां प्राहरत्। द्वितीयोऽपि तं शृङ्गाभ्यां प्राहरत्। (एकस्मिन्नेव वाक्येऽभिप्रायो वाच्यः।)

४. तमधः पतन्तं प्रहरन्नसौ द्वितीयोऽपि सेतोश्च्युतः। ('यावत्-तावत्' इति पदे प्रयुज्य प्रकृतार्थो वक्तव्यः।)

५. सेतौ स्थलाभावं प्रथमोऽजोऽपश्यत्। सावधानतया स तत्रोपाविशत्। (एकस्मिन्नेव वाक्ये भावार्थो निर्देश्यः।)

६. द्वितीयमजयुग्मं विवेकं विनयं चादर्शयत्। तदेवाजद्वयं स्वस्थानं क्षेमेणोपागच्छत्। (एते वाक्ये त्रिभिः प्रकारैः संयोजय।)

# चतुर्थः पाठः

## दानशीलः शार्दूलः।

The Tiger-Donor

आसीद्दक्षिणारण्ये कोऽपि जराग्रस्तः शार्दूलः। गलितास्तस्य नखरा दन्ताश्च। धावनेऽप्यक्षमः स नाशक्नोद् एकमपि मृगं हन्तुम्। तेन क्षुधितः स इतस्ततोऽरण्ये विचरन् दैवादलभत सुवर्णकङ्कणम्। तद् गृहीत्वा सोऽचिन्तयत्। अहो भाग्येनैतत् प्राप्तम्। अनेन वञ्चयामि कंचिल्लोभाकृष्टं नरं भक्षयामि चेति। ततः स तडागस्य तीरे स्नातः कुशहस्तः सन्नवदत्। भो भोः पान्थाः, गृह्यतां सुवर्णकङ्कणमिदमिति। तदाकर्ण्य कश्चिल्लोभाकृष्टः पथिकोऽचिन्तयत्। अहो परमं मे भाग्यमिति। प्रकाशं स ब्रूते। 'कुत्र रे व्याघ्र तव कङ्कणम्' इति। व्याघ्रो हस्तं प्रसार्य तददर्शयत्। पान्थोऽवदत्। 'कथं मारात्मके त्वयि विश्वासः कर्तव्यः। नेच्छामि तव समीपमागन्तुम्'। व्याघ्रः प्रत्यभाषत। शृणु रे पान्थ अतिदुर्वृत्त आसं प्रागहं यौवने। अकरवं च बहूनां मृगाणां मनुजानां च वधम्। तेन पापाचरणेन मृता मे पुत्रा दाराश्च

वंशहीनश्चाहमभवम् । ततः केनचिद्धार्मिकेणैवमुपादिष्टोऽहं यद् दानधर्मादिकं चरतु भवानिति । तस्योपदेशादिदानीमहं साध्वाचारः सञ्जातोऽस्मि । गलितं मे नखदन्तं धावनेऽप्यसमर्थोऽहम् । कथमधुनाप्यहं न विश्वासभूमिः । मम चेदृशो लोभविरहो येन हस्तगतमपि सुवर्णकङ्कणं यस्मै कस्मैचिद्दातुमिच्छामि । तथापि



व्याघ्रो मानुषं खादतीति दुर्निवारो लोकापवादः । मया धर्मशास्त्राण्यधीतानि । त्वं चातीव दुर्गतस्तेन तुभ्यमिदं दातुं सयत्नोऽहम् । तदत्र तडागे स्नात्वा गृहाणेदं काञ्चनवलयमिति ।

शार्दूलस्येदं वचनं श्रुत्वा स द्रव्यलुब्धोऽचिन्तयत् । अहो सुवृत्तोऽयं वन्यः पशुः । सत्यमेव पश्चात्तापाद्ग्धमस्य दुष्कृतम् । तेनासौ धार्मिकः संभूतः । गलितं चास्य नखदन्तम् । तस्मादिच्छन्नपि मां व्यापादयितुं न शक्नोत्येष इति । ततो व्याघ्रस्य

वचसि प्रतीतो यावदसौ कृपणो लोभात् पल्वलं स्नातुं प्राविशत् तावन्निमग्नोऽभवन्महापङ्के । तं पङ्के पतितं वीक्ष्य व्याघ्रोऽवदत् । अहह, महापङ्के पतितोऽसि । अतस्त्वामहमुद्धरामि । इत्युक्त्वा शनैः शनैरुपगम्य स तं व्यापादयत् ।

> कङ्कणस्य तु लोभेन मग्नः पङ्के सुदुस्तरे ।
> पान्थो व्याघ्रेण संप्राप्तः स्वभावो दुरतिक्रमः ॥ १ ॥

**प्रश्नाः**—वृद्धत्वस्य कानि लक्षणानि भवन्ति ? कथं कृपणः कङ्कणं ग्रहीतुमात्मानमन्वनयत् ? कथं विश्वास उत्पादितो व्याघ्रेण ? किं तात्पर्यमस्याः कथायाः ?

**शब्दप्रयोगाः**— १. धावने क्षमः-क्षमो वा । धावनाय अलम्—नालं वा
२. अर्जने प्रवृत्तिः । अर्जनाय परिश्रमः ।
३. पश्चात्तापात् दग्धम् । पश्चात्तापेन दग्धम् ।
(वाक्येषु प्रयोजयैतान् शब्दान्)

(अमरकोषे)
१. अटव्यरण्यं विपिनं । गहनं काननं वनम् ॥
२. निःस्वस्तु दुर्विधो दीनो । दरिद्रो दुर्गतोऽपि सः ॥

**साधितानि विशेषणानि**—धर्मः—धार्मिकः पुरुषः । तद्वत्—
घातः ——— । पन्थाः ———
नृत्यम् ——— । मारात्मा ——— ।

**वाक्यरचना**—

१. वंशहीनोऽहं जातः ('वंशः' इति पदं कर्तृत्वेन वाच्यम् ।)

२. कथमहं न विश्वासभूमिः । ('अहं'–स्थाने 'मयि'–पदं प्रयोजय ।)

३. व्याघ्रो मानुषं खादतीति दुर्निवारो लोकापवादः ।

(अ) (अधोरेखित–शब्द–स्थाने किमपि विशेषणं प्रयोजय ।)

(ब) ('दुर्निवारः'–इत्यस्य स्थाने नञ्–युक्तः प्रयोगः क्रियताम् ।)

४. दानमाचरामि। दानात्परो न धर्मः। (एते वाक्ये संयोजय।)

५. यावत्कृपणः पल्वलं प्रविशति तावत्स महापङ्के निमज्जति। ('यावत् तावत्' दूरीकृत्य प्रकृतार्थं विशदीकुरु।)

६. स्वभावो गुणानतीत्य सर्वेषां मूर्ध्नि वर्तते ('यद्यपि–तथापि–' पदे प्रयोजय।)

# पञ्चमः पाठः।

## लुब्धक–कपोतानाम्।

*The Hunter and the Doves*

आसीत्कस्मिंश्चिद्वनोद्देशे महान् शाल्मलीतरुः। तत्र कदाचित् प्रभाते कोऽपि लुब्धको भूमौ तण्डुलकणान् विकीर्य व्यतनोत् तदुपरि *spread* जालम्। एवं प्रस्तावविधिं समाप्य स तत्रैव प्रच्छन्नोऽभवद् विटपेषु। *began* अत्रान्तरे चित्रग्रीवो नाम कपोतराजः परिचरैः परिवृतस्तत्रैवाकाश-मार्गेण परिभ्रमन्नागतः। तदा भूमौ तण्डुलकणान् वीक्ष्य कोऽपि तरुणकपोतोऽवदत्। महाराज, रुचिरानेतान् तण्डुलकणान् भक्ष-यितुमवतराम इति। तदाकर्ण्य कश्चिद् वृद्धकपोत आह। कुतोऽत्र धान्यकणानां सम्भवः? न किमपि क्षेत्रं दृश्यते समीपे। तस्मात्के-नापि व्याधेनैव विकीर्णा इमे धान्यकणा इति मे मतिः। तेन च सन्निधावेव भाव्यं कुत्रापि प्रच्छन्नेन। एषैव लुब्धकानां रीतिः। तदत्र नावतरणीयम्। अन्यत्र मृगयामहे भक्ष्यम् इति। ततोऽविचारिभिस्त-रुणकपोतैः कृतः कोलाहलः। वयं क्षुधार्ता अत्रैव किंचिद्भक्षयाम इति। एवं तेषां निर्बन्धं ज्ञात्वा भोजनलिप्सया भूमिमवातरत् सानुगश्चित्रग्रीवः।

तत्र विकीर्णान् तण्डुलकणान् यावत्ते कपोताश्चिन्वन्ति ताव-ज्जाले संलग्नास्तेषां नखाः । तस्मादात्मानं मोचयितुमसमर्थास्ते तत्राबध्यन्त । तत्सङ्कटमुद्वीक्ष्य स खगपतिः सर्वाननुचरा-नभाषत । अयि वयस्याः, बद्धाः स्मो वयमस्मिञ्जाले । अचिरादेव लुब्धकोऽत्रागमिष्यति ग्रहीष्यति चास्मान् । तस्यागमनात् प्रागेवो-



ड्डयितव्यमस्माभिरस्मात् स्थानात् । अत एतज्जालं चञ्चुभिर्गृहीत्वा सर्वे समकालमुत्पतत सवेगमिति । ततस्ते कपोता जालमादाय महतावेगेन समुत्पत्य प्राक्रमन्त नभोमार्गेण । तद् दृष्ट्वा समुद्विग्नः स लुब्धक ऊर्ध्वदृष्टिः कंचित्कालं तानन्वधावत् । किन्तु सुदूरं

गतान् कपोतान् कण्टकितं च भूप्रदेशं वीक्ष्य स खिन्नवदनो गृहं न्यवर्तत । अथ निर्भयश्चित्रग्रीवः स्वानुचरानब्रवीत् । समीपे वसति हिरण्यको नाम मूषको मे मित्रम् । व्रजामस्तस्य सकाशम् । स च छेत्स्यत्यस्माकं पाशानेतानिति । ततो नभस्तोऽवातरत् सोऽनुगैः कपोतैः सह सत्वरं तस्य मूषकस्य बिलद्वारम् । चित्रग्रीवस्य शब्दं समाकर्ण्य बिलान्निरगच्छद् हिरण्यकः । तानापन्नस्तान् पारावतान् दृष्ट्वा प्रथमं तेषां पाशानच्छिनत् । अनन्तरं च तानवदत् । असमीक्ष्यकारिणमेव व्यसनान्यापतन्त्यनिशम् । तस्मात् समीक्ष्यकारिभिः सदा युष्माभिर्भाव्यम् । अस्मात्सङ्कटात्सङ्घशक्त्यैव रक्षिता यूयम् इति । चित्रग्रीवोऽब्रवीत् । उपकृताः स्मो वयं भवता । अवर्णनीयं खलु भवतो दशनानां कौशलमिति । एवं छिन्नपाशास्ते पारावता मूषकमामन्त्र्य क्षेमेण प्राप्ताः स्वस्थानम् ।

> लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् ।
> तृषार्तो दुःखमाप्नोति जन्तुर्जगति मोहितः ॥ १ ॥

**प्रश्नाः**—कीदृशी वृत्तिर्लुब्धकस्य? कथं वृद्धकपोतेन सङ्कटमुद्वीक्षितम्? तस्मात्सङ्कटान्निर्गन्तुं क उपायश्चिन्तितः खगराजेन? कथं छिन्नं तज्जालं मूषकेण?

> सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
> वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ १ ॥

**अमरकोषे**—१. व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः । Hunter

२. उन्दुरुर्मूषिकोऽप्याखुर्गिरिका बालमूषिका । mouse

**शब्द-प्रयोगाः**—१. लुब्धकेन सन्निधौ भाव्यम् । –'लुब्धकः सन्निधौ वर्तते' इति तर्कः । (तथा चेतरेषां धातूनां तादृशानि कृदन्तानि वाक्येषु प्रयोजय ।)

२. सपरिवारः, सानुगः, सानुयायी—(एतान् शब्दान् वाक्येषु प्रयोजय ।)

# षष्ठः पाठः ।

## उद्यमशीलः कृषीवलः ।

The Industrious farmer

अथैकस्मिन्नुटजे निवसति स्म कश्चित्कृषीवलः। सततोद्यमशीलः स न कदाप्यलसोऽतिष्ठत्। गच्छता कालेन वृद्धत्वमापन्नः स उटजसमीपमेव किमपि किमपि कुर्वन् कालमनयत्। एकस्मिन् दिने निकटवर्तिना मार्गेणागतस्तत्प्रदेशस्य नृपतिः । तमन्वसरतां द्वौ राजपुरुषौ । अश्वारूढास्ते त्रयः सकौतुकमपश्यन् प्रजानां परिश्रमस्य फलानि। तदुटजं दृष्ट्वा स भूपतिरवदत्—अहो स्वच्छं सुरचितं चैतदुटजम्।

प्र. राजपुरुषः—एवमेतन्महाराज । अपि च सफला दृश्यन्ते वृक्षाः समीपस्थाः।

द्वि. राजपुरुषः—देव, पीनाश्चैते पशवोऽत्र चरन्ति।

ततः पुरतः स नृपस्तं वृद्धं कृषीवलमपश्यत्। स च तं नराधिपं विनयेन नत्वाऽञ्जलिं च बद्ध्वाऽतिष्ठत्।

नृपतिः—स्वस्ति ते भोः कृषीवल। तवाश्रमं दृष्ट्वाऽतीव सन्तुष्टः खल्वहम्। किं करोषि तत्राधुना।

कृषीवलः—अत्र तावन्नूतनमाम्रमारोपयामि महाराज।

नृपतिः—रे स्थविर, कियत्ते वयः।

कृषीवलः—प्रसीदतु देवः । अशीतिर्वर्षाणि व्यतीतानि मम जातस्य।

नृपतिः—हन्त भोः अशीतिवर्षीयस्त्वम् । साधु रे जरठ

साधु । ननु धन्योऽहं यन्मम प्रजा दीर्घायुरुपभुञ्जते । अपरं च पृच्छामि । रे वयस्य, अस्य नूतनस्याम्रस्य फलान्यास्वादयितुं जीविष्यसि किम् ।



कृषीवलः—न तज्जाने महाराज । ईश्वराधीनमेव तद् ।

नृपतिः—किमर्थं तर्हि तवैष परिश्रमो यस्य फलमुपभोक्तुं तवायुः स्यान्न वेति सन्देहः ।

कृषीवलः—देव, कर्तव्यमिति करोम्येतस्याम्रस्यारोपणं न केवलमात्मन उपभोगार्थम् । अहमास्वादये पूर्वजैरारोपितानां

तरूणां फलानि। तथैव मयारोपितस्य तरोः फलान्यास्वादयन्तां मे पुत्राः पौत्राः प्रपौत्रा अन्ये च बान्धवाः। एषैव जगतः परिपाटिः।

नृपतिः—रे वयस्य, समीचीना खलु ते मनोवृत्तिः। सुष्ठु शोभसे कर्तव्यज्ञानेनैतेन। एतत्ते पारितोषिकं प्रयच्छामि। (दश रूप्यकान् प्रयच्छति)

कृषीवलः—(तद् गृहीत्वा) अहो कृपालुर्गुणज्ञश्च भवान्। महाराज, अनुगृहीतोऽस्मि। अद्यारोपणकाल एवैष वृक्षो दश रौप्यमयाण्याम्रण्यजनयत्। नूनं सफलो मे प्रयत्नः।

**प्रश्नाः**—किमकरोत्स कृषीवलः प्रभाते? कीदृशानि साधनान्यारोपणस्य? तत्क्षेत्रं दृष्ट्वा कीदृशी मनोवृत्तिस्तस्य राज्ञः? किमर्थं स जरठ आरोपयन्नवीनमाम्रम्? कीदृशानि तस्याद्यफलानि?

**अमरकोषे**—द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु। wealth
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि॥

**शब्द-प्रयोगाः**—१. वृक्षाणां सेचने व्यापृतः स कृषीवलः।
व्यापृताः शिष्याः ।
राज्यशासने व्यग्रः—सोद्योगः—अनलसः
निरताः बालकाः।

२. सुष्ठु शोभते कृषीवलः कर्तव्यज्ञानेन।
सुष्ठु शोभन्ते नृपतयः ।
सुष्ठु शोभते रजनी ।

३. पथिकानां साहाय्यमकरोत् कृषीवलः।
गोपालो धेनवे— —यच्छति।
देयं वित्तं वान्नं वा वस्त्रं वा।
गुरवे — —दातुकामाश्छात्राः।

**उपसर्गक्रियाः**—'आप'–धातोरर्थं उपसर्गैः कथं भिन्नो भवति तद्दर्शयोदाहरणैः। obtain.

आप्
पर्याप्तम् - sufficient
समाप्तम् - finish

Self-willed lamb.

## सप्तमः पाठः ।

Innocent

### स्वच्छन्दिनो मेषपोतस्य ।



स्वयूथात् क्वचिदपि नापगन्तव्यमिति बहुशो मात्रोपदिष्टोऽपि कश्चिन्मेषपोतः स्वातन्त्र्याय स्पृहयति स्म । अथैकदा घर्मकाल आतपेन क्लान्तः पिपासार्दितो भूत्वा कांचिदल्पसरितं गतः स एकाकी जलं पातुम् । तत्रोन्नते प्रदेश उदकं पिबन्नास्ते कोऽपि वृकः । तं दृष्ट्वा स मेषशिशुर्निम्नप्रदेशं गत्वा जलं पातुमारभत । वृकस्तु दूरात्तं वीक्ष्य सुलभो रुचिरश्चायं कवल इति मनसि कृत्वा केनापि निमित्तेन प्राक्रमत कलहं समुत्पादयितुम् । तमभिगत्य स हिंस्रोऽब्रवीत् । आः पाप, किमर्थमाविलयसि रे मम जलम् । कथं मयाधुना कर्तव्या तृषाशान्तिः । कः खलु पातुं शक्नोति पङ्किलमेतादृशं तोयम् । किन्निमित्तमनुचितमेतदारब्धं त्वया । तूर्णं निवेदय मे सर्वम् । नो चेद्वध्यो भवसि मयास्मिन्नेव क्षण इति ।

एतच्छ्रुत्वा भीतभीतः स मेषशिशुः सविनयं तमवदत् । भो वृकवर, असंभावि खल्वेतत् । पश्य, त्वमुन्नते प्रदेशे स्थितः । अहं तु निम्ने प्रदेशे । उन्नतात्प्रदेशात्सर्वदा निम्नं प्रदेशं प्रति वहति जलम् । तस्मात् त्वत्तो यज्जलं वहति तदहं पिबामि । एवं स्थिते मया कलुषितं जलं प्रतीपं त्वां प्रति कथं प्रवहेदिति । एतन्निशम्य वृक आह । अस्तु नामैतत् । नूनं त्वमधमोऽसि । असत्यं तव वचनमिति किमर्थं मामधिक्षिपसि । दशमासेभ्यः प्राक् त्वं मामशप इत्यहमशृणवम् । तत्सत्यमेव । यः खलु प्रत्यक्षं निन्दन् न लज्जते स परोक्षमवश्यमपभाषेतेति । ततः स मेषशावः प्रत्यवदत् । हा कष्टम् । कथमेतत्सम्भवेत् । यतो जातस्य मम मासषट्कमपि

पूर्णम् । सोऽहं दशमासेभ्यः प्राक् त्वामशपमिति नैव शक्य-



मिति । अत्रापि निरुत्तरोऽभवद् वृकः । अनेन प्रतिवचनेन निर्जितोऽसौ भृशमक्रुध्यत् । नेत्रे विस्फारयन् दन्तान्दन्तैर्विघट्टयन् पादाघातैर्भूमिं च कम्पयन्निव स तारस्वरेणागदत् । भो दास्याः पुत्र, यदि त्वं नाशपस्तर्हि तव पिता मामशपदिति मे निश्चयः । न कोऽपि विशेषोऽत्र रे शठ । पितुर्दोषस्य दण्डं त्वमनुभवितु-मर्हसीति । ततश्च तेन हिंस्रेण व्यापादितोऽसौ वराकः ।

**प्रश्नाः**—मात्रा किमुपदिष्टः स मेषपोतः ? कुत्रागच्छत् स एकदा ? किमवदद्वृकस्तम् ? कथं वहति जलं सर्वदा ? कीदृशः स्वभावो वृकस्य ?

**अमरकोषे**—पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।

**विरुद्धाः शब्दाः**—उन्नतः— निम्नः । सन्मार्गः ।

कलुषितम्— । —रक्षणीयः ।

सुशीलः—दुःशीलः। सुलभम्—दुर्लभम्।
स्तुतिः—निन्दा। अन्वोघम्—
अनुकूलम्—प्रतिकूलम्। प्रत्यक्षम्—परोक्षम्।

**शब्द-प्रयोगः**—१. जन्तवः स्वातन्त्र्याय स्पृहयन्ति।
वृका अजानां मांसाय स्पृहयन्ति।
सज्जनः सर्वेषां मानवानां हिताय स्पृहयन्ति।

(स एवार्थः)—२. जन्तुभ्यः स्वातन्त्र्यं रोचते।
वृकेभ्योऽजानां मांसं रोचते।
सज्जनेभ्यः सर्वेषां मानवानां हितं रोचते।

३. विंशतितमाद् वर्षात् प्राक् कौमारं भवति।
पर्जन्यकालात्प्राक् कृषीवलाः क्षेत्राणि कृषन्ति।
विवाहात् प्राक् महत्तपः पार्वत्या तप्तम्।

# अष्टमः पाठः।

## गृध्र-मार्जारयोः।

Vulture and Cat

**आसीद्भागीरथ्यास्तीरे कश्चिन्महान् पर्कटीवृक्षः। तस्य कोटरे प्रत्यवसद् वृद्धत्वाद् गलितनखो विनष्टदृष्टिर्जरद्गवो नाम गृध्रः। अन्ये च बहवः पक्षिणस्तस्मिन् वृक्षे स्वस्वनीडेष्ववसन्। ते कृपया तस्य जरद्गवस्य जीवनाय स्वाहारात् किंचित् किंचि-दुद्धृत्य तस्मायददुः। तेनासौ निरवर्तयत जीवितयात्राम् अरक्षच्च तेषां शावकान् दिवा बहिर्गतेषु पक्षिषु। अथ कदाचि-द्दीर्घकर्णो नाम मार्जारस्तत्रागतः खगशावकान् भक्षयितुम्। तमायान्तं बिडालमालोक्य कोलाहलः कृतस्तैः खगशिशुभिः। स यदा जरद्गवस्य कर्णपथमागच्छत्तदा तेनोदितम्। 'कोऽय-**

मायाति ।' दीर्घकर्णो गृध्रमालोक्य सभयमचिन्तयत् । 'हा हतोऽस्मि । अधुनास्य सकाशात् पलायितुमक्षमोऽहम् । भवतु । इदानीं तावद्विश्वासमुत्पाद्यास्य समीपं गच्छामीति ।' उपसृत्य मार्जारोऽब्रवीत् । 'आर्य त्वामहं वन्दे ।' परुषस्वरेण गृध्रोऽपृच्छत् । 'कस्त्वम् ।' सोऽवदत् । 'विडालोऽहम् ।' गृध्रो ब्रूते । 'दूरमपसर । नो चेद्धन्तव्योऽसि मया ।' ततः स मार्जारोऽ-



भाषत । 'श्रूयतां तावन्मे वचनम् । ततो यद्यहं वध्यस्तर्हि हन्तव्यः । यतो जातिमात्रेण न कश्चित् क्वचिद्धन्यते पूज्यते वा व्यवहारं परिज्ञाय वध्यः पूज्योऽथ वा भवेत् ।' गृध्रः पृच्छति 'ब्रूहि किमर्थमागतोऽसि ।' विडालो न्यवेदयत् । 'अहमत्र गङ्गातीरे वसामि चान्द्रायणव्रतमाचरन् । यूयं धर्मज्ञानरत विश्वासभूमयो गुरव इति प्रस्तुवन्ति पक्षिणः सर्वे ममाग्रे अतोऽहमिहागतो भवद्भ्यो धर्मं श्रोतुम्' इति । ततः सौम्य

स्वरेण गृध्रोऽवदत्। 'मार्जारो भवति मांसरुचिः। अत्र वसन्ति च विहगडिम्भाः। तेनाहमेवं ब्रवीमि।' तदाकर्ण्य बिडालो भूमिं स्पृष्ट्वा कर्णौ स्पृशति ब्रूते च। 'मया धर्मशास्त्रं श्रुत्वा दुष्करमिदं व्रतमङ्गीकृतम्। 'अहिंसा परमो धर्मः, इति न केवलं मया ज्ञातं किंत्वाचरितम्' इति।

एवं विश्वास्य स्थितः स आखुभुक् तरुकोटरे जरद्गवस्य सन्निधौ। प्रतिदिनं च विहङ्गमपोतानाक्रम्य कोटरमानीय खादति स्म विश्रब्धम्। दिनेषु गच्छत्सु येषामपत्यानि खादितानि तैः शोकार्तैः पक्षिभिरितस्ततो जिज्ञासा समारब्धा। तत्परिज्ञाय मार्जारः कोटरान्निभृतं निःसृत्य बहिः पलायितः। पक्षिभिरितस्ततो निरूपयद्भिः प्राप्तानि कोटरे शावकास्थीनि। ततोऽमुनैव जरद्गवेनास्माकं शावकाः खादिता इति सर्वैः पतत्रिभिर्निश्चित्य व्यापादितः स गृध्रः।

अज्ञातकुलशीलस्य वासो देयो न कस्यचित्।
हतो मार्जारदोषेण निरागस्को जरद्गवः॥ १॥

**प्रश्नाः**—कीदृशः स्वभावो जरद्गवस्य दीर्घकर्णस्य च? कथं विश्वास उत्पादितो मार्जारेण? किमकरोत्स बिडालोऽनन्तरम्? किमर्थं जिज्ञासारब्धा खगैः?

**अमरकोषे**—ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक्। — C a L

**शब्दाः**—'खग'-वाचकान् 'अपत्य'-वाचकान् 'मार्जार'-वाचकांश्च सर्वान् शब्दान् कथय। तेषामर्थांश्च निवेदय।

**स्पष्टीकरणम्**—१. चान्द्रायण-व्रतम्—चन्द्रो यथा वर्धते तथाहारो वर्धनीयः। किं च स यथा क्षीयते तथाहारः क्षपणीयः। आलेखनस्य साहाय्येन तदेव दर्शय।

२. विश्वासभूमिः—विश्वासयोग्यः—विश्वासमर्हतीति।

धातु-साधितानि—हन्—घात्य, हन्तव्य, हननीय। (विशेषणानि)

तथैव—दा - ——, ——, ——

पूज्- ——, ——, ——

भक्ष्— ——, ——, ——।

---

# नवमः पाठः।

## द्वयोः कलहे तृतीयस्य लाभः।

The quarrel of [illegible] the profit of the third

अथैकस्मिन् ग्रामेऽवसतां कौचिद् बिडालौ। मित्रभावं प्राप्तौ तौ बहुश एकत्राचरताम्। कदाचिद् भक्ष्यं किंचित्प्राप्तुं यतमानौ किमपि गृहमागतौ तौ मार्जारौ। तत्र च निभृतमन्तः प्रविश्य ताभ्यां दृष्टः पृथुलो मोदकः। निर्जनं तत्स्थलं वीक्ष्य सत्वरं तयोरन्यतरो बिडालस्तं मोदकं मुखेन धृतवान्। तत उद्याने विविक्तं किमपि स्थानं गच्छाव इत्युक्त्वा तौ सत्वरं बहिः पलायितौ। तत्र शीतलायां छायायामुपविश्य मोदकं विभक्तुं तौ प्रारभेताम्। पार्श्वयोर्धृत्वाकृष्टो द्विधाभूतः स मोदकः। उभाभ्यामपि बिडालाभ्यां प्राप्तं मोदकस्य खण्डमेकैकम्।

प्रथमो बिडालः—अपि जातौ समानौ विभागौ।

द्वितीयो बिडालः—न हि न हि। मदीयो भागोऽल्पतरस्त्वदीया-द्भागात्। तत् किंचिद्देहि मह्यम्।

प्र० बि०—नैतच्छक्यमधुना। त्वयैवाकृष्टः स शकलो मया चैषः। नाहं दास्यामि स्वल्पमपि तुभ्यं मामकी-नादंशात्।

द्वि० बि०—कथं न यच्छसि । त्वत्तोऽपहरामि तं बलात् ।

प्र० बि०—मयैव प्रथमं दृष्टो मोदक आनीतश्चात्र । तदर्थं किंचिदधिकं प्राप्तुमर्हामि ।

द्वि० बि०—मया च रक्षितो द्वारदेशः । तेनैवात्रागतस्त्वं विश्रब्धम् । ततः समभागमेवाहं ग्रहीष्यामि ।



इति ब्रुवतोस्तयोः कलहः संजातः । तावन्योन्यं महतावेशेनाभ्यद्रवतां नखैर्दन्तैश्च केशानलुञ्चतां परस्परस्य । दारुणं द्वन्द्वयुद्धं समभवत्तयोर्घोरश्च घुर्घुरध्वनिः । तमाकर्ण्य वृक्षस्थः कोऽपि वानरोऽवतीर्यावदत् । किमर्थं भो युध्यते युवाभ्याम् । मा मैवं कुरुतं कलहम् । अहं निर्णयामि युवयोर्विवादम् । पश्यतमेतां मे सूक्ष्मां तुलाम् । निपुणश्चाहं न्यायाध्यक्ष इति ।

ततस्तौ मार्जारौ कलहान्निवृत्तौ स्थापितवन्तौ कपेस्तुलापात्रयोर्मोदकांशौ। एकतरं पात्रमधो गच्छद् दृष्ट्वा स न्यायप्रियो वञ्चकोऽभाषत। सत्यमेवासमानौ शकलावेतौ। एष गुरुरन्यश्च लघुः। भवतु, समानौ विधास्यामि। इत्युक्त्वा गरीयसो भागात् कियानप्यंशस्तेन सत्वरं दशनैश्छिन्नो ग्रसितश्च। पुनरपि तुलामुद्धृत्य स निर्णेता सानन्दमब्रवीत्। अये, अयं द्वितीयो भागोऽधुना भूयान् जातः। नैतद्युक्तमिति। तस्माद् द्वितीयाद् भागात् कियानप्यंशस्तेन द्रुततरं दशनैश्छिन्नो ग्रसितश्च। अनेन क्रमेण द्वयोरपि भागयोर्बह्वंशो भक्षितस्तेन वानरेण। तुलापात्रेऽल्पमेवावशिष्टं वीक्ष्य चिन्ताकुलौ तौ बिडालौ प्रार्थयेतां तं न्यायाध्यक्षम्। दीयतां भोः तदेवावाभ्याम्। आवां सन्तुष्टौ भवतां निर्णयेनेति। ततः स कपिरवदत्। साधु साधूक्तं युवाभ्याम्। दीयतां तर्हि किंचिद्वेतनमस्मभ्यमेतत्परिश्रमस्य। अवशिष्टौ मोदकस्यैतौ खण्डौ वेतनमस्माकं भवितुमर्हत इति। तत्क्षणमेव स न्यायनिपुणस्तौ मोदकांशावग्रसत तुलां च गृहीत्वा तरुशिखरमुदप्लवत। तेन विपण्णौ तौ बिडालौ परस्परं निन्दन्तौ यत्र कुत्रापि निर्गतौ।

**प्रश्नाः**—किं प्राप्तवन्तौ मार्जारौ? कुत्रागच्छताम् तौ भक्षणार्थम्? कस्मात्कारणात्कलहस्तयोर्जातः? कस्तस्य निर्णयं कर्तुमागच्छत्? किं दर्शयति तुला?

**अमरकोषे**—आरामः स्यादुपवनं उद्यानं कृत्रिमं वनम्। garden

**नाट्यम्**—एषा कथा त्रिभिः कुमारैर्नाटयितव्या।

**शब्द-प्रयोगः**—१. मम मोदकः – मदीयः मोदकः – मामकीनः मोदकः।

२. तव तुला—त्वदीया तुला – तावकीना तुला।

३. तस्य पात्रम् – तदीयं पात्रम्।

( तथैव भवदीय–अस्मदीय–युष्मदीय इत्यादीनां विशेषणानां प्रयोगाः )

**धातुसाधितानिः**— १. वर्तमान-काल-वाचकम्— (विशेषणम्)

आ. प. {
यत्—यतमानः पुरुषः । यतमाना नारी । यतमानं मित्रम् ।
भाष्—भाषमाणः भाषमाणा —— । भाषमाणं — ।
शी—शयानः ——। शयाना —— । शयानं —— ।
}

प. प. {
वद्—वदन् —— । वदन्ती ——। वदत् ——।
चि—चिन्वन्——। चिन्वती ——। चिन्वत् ।
ज्ञा—जानन् ——। जानती —— । जानत् —— ।
}

२. भूतकाल-वाचकं कर्तरि—(विशेषणम्)

वच् —— उक्तवान् पुरुषः । उक्तवती बाला । उक्तवत् मित्रम् ।

कृ कृतवान्——। कृतवती ——। कृतवत् ।

लभ्—— लब्धवान् ——। लब्धवती ——। लब्धवत् ।

वाक्येषु प्रयोजयैतानि रूपाणि ।)

# दशमः पाठः ।

## शशकेन निपातितः सिंहः ।

A lion destroyed by a h

**अथ कस्मिंश्चिद् विपिनेऽवसत् क्रूरकर्मा नाम कोऽपि सिंहः । दिवा स गुहायामस्वपत् सायं चेतस्ततोऽचरत् । प्रतिदिनं बहून् पशून् स व्यापादयदेकैकस्य च शरीरादल्पाल्पमंशं स्वैरं भक्षयित्वा क्षुधानिवृत्तिमकरोत् । अनेन क्रमेण अचिरादेव तेन शतशः प्राणिनो हतास्तस्मिन् वने । तेन संत्रस्ता वनवासिनो मृगा एकत्र मिलित्वाचिन्तयन्। हा कष्टं क्षणभङ्गुरमेव जीवितं जातमस्माकम् । केनोपायेन व्यसनमिदं समुत्तरेमेति । ततः**

कश्चिद् वृद्धो हस्ती ब्रूते । जानाम्येकमुपायमत्र । अन्वागच्छत माम् । अधुनैव गच्छामस्तस्य सिंहस्य समीपमिति ।



ततस्ते सर्वे सिंहस्य निवासस्थानं गत्वा तत्र च सुखोपविष्टं तं दृष्ट्वा साष्टाङ्गपातं प्राणमन् । तदा तेषामग्रणीरब्रवीत् । भो मृगराज, वयं सर्वे वनचरास्तव दासाः । वृथा व्यापादयसि त्वं प्रतिदिनं बहून् मृगान् यतस्तव भोजनं भवत्येकेनैव । अनेन क्रमेणाचिरादेव मृगशून्यं भविष्यतीदं वनम् । किं भक्षयिष्यसि ततस्त्वम् । अतो हे मृगपते, त्वया सह समयं कर्तुमिच्छाम इति । स क्रूरकर्मापृच्छत् ।

'कोऽसौ समयः' । दन्ती प्रत्यभाषत । प्रतिदिनमेकैकं पशुं वयं तव समीपं प्रेषयामः । स चात्र सायंकाल आगमिष्यति । तं त्वं सुखेन भक्षय । अन्यान् मा जहि । एवं विनायासं गुहायामेव भोजनं प्राप्स्यसि चिरं च जीविष्यसीति । ततः स केसरी सानन्द-मवदत् । साधूक्तं रे जरठ, त्वया । संमत एष समयो मम । तथैवानु-तिष्ठत यूयमिति । ततः प्रभृति यथासमयं प्रतिदिनमेकैकः पशुः सिंहमुपगच्छति तं च व्यापाद्य स्वोदरं पूरयति स क्रूरकर्मा ।

अथ गच्छता कालेन समायातो धूर्तबुद्धेर्नाम वृद्धशशकस्य वारः । स मार्गेण गच्छन्नचिन्तयत् । यद्यवश्यमेव मरणं तर्हि किं सिंहस्यानुनयेन । मन्दं मन्दमेव गच्छामीति । अत्रान्तरे दृष्टः कश्चित्कूपस्तेन मार्गे । मरणात्प्राक् तृषां निवर्तयामि सकृदिति चिन्तयित्वा गतः स कूपतीरम् । तत्र यावत्स जलं पिबति तावत्स्वप्रतिबिम्बं तत्र दृष्ट्वाचिन्तयत् । एषा वाप्येव मां रक्षिष्य-तीति । ततः प्रस्थितः स शनैः शनैः सिंहाभिमुखम् । क्रूरकर्मा-गच्छन्तं तं दूराद् दृष्ट्वा कोपादवदत् । 'किमर्थं रे मूढ विलम्बेन समागतोऽसि' इति । शशकोऽब्रवीत् । 'देव, नाहमपराधी । आगच्छन् पथि निरुद्धोऽहं बलादन्येन सिंहेन । तस्याग्रे पुन-रागमनाय शपथं कृत्वा भवते निवेदयितुमत्रागतोऽस्मि' इति । स मृगेन्द्रः सकोपमाह । 'आः कथमत्रैव जीवति सिंहान्तरम् । सत्वर-मेहि । दर्शय तं दुरात्मानम् । प्रेषयामि तं यमसदनम्' इति । ततः कूपतीरमनयत् स धूर्तबुद्धिस्तम् । दूरात्तं दर्शयित्वा सोऽवदत् । 'अत्र निलीनः सोऽपरो बलवान् सिंहस्तिष्ठति' इति । ततः स क्रूरकर्मा स्वप्रतिबिम्बं वाप्यामपश्यत्तच्च सिंहान्तरं मत्वा न्यक्षिपत् क्रोधात्तस्योपर्यात्मानम् । जले निमग्नः सन् पञ्चत्वं च गतः ।

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥ १ ॥

**प्रश्नाः**—किमर्थं सिंहोऽनेकान् पशूनहन्प्रतिदिनम् ? केनोपायश्चिन्तितः ? कः समयः कृतः पशुभिः ? कथं सिंहस्य वधोपायः समभवच्छशकस्य मनसि ? केन प्रतारितः सिंहः ?

**अमरकोषे**—सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः । Lion

**शब्द-प्रयोगः**—१. एकशः, द्विशः, त्रिशः,...सप्तशः,...शतशः, 'सिंहेन शतशः प्राणिनो हताः ।' सैनिका द्विशो मार्गेण गच्छन्ति—कदाचिच्चतुःशो वा ।

२. द्विविध, त्रिविध,...सप्तविध, ..शतविध। 'तेन समयेन द्विविधं फलं प्राप्तम्। सिंहोऽनायासेन भोजनमलभत वनचराश्च स्वास्थ्यम् ।'
अनया कल्पनया त्रिविधं फलं प्राप्तं शशकेन । स्वप्राणा रक्षिताः, स क्रूरकर्मा कूपे पातितः, सर्वे चान्ये पशवो भयान्मोचिताः ।

**साधिताः शब्दाः**—केसरः—केसरिन् । (वाक्येषु प्रयोजय)
प्राणाः—प्राणिन् । बलम्— । सुखम्— । शशः— ।
वनवासः—वनवासिन् । करः— ।

# एकादशः पाठः ।

## स्वार्थपरः केसरी ।

The Selfish Lion.

**अथ कस्मिन्नपि विपिनेऽवसत् कश्चित्सिंहः । विनायासं कथं भोजनं लभेयेति बुद्ध्या स उपायं चिन्तितवान् । तदनुरोधात् स कांश्चित्पशूनाहूयाब्रवीत् । भो मित्राणि, अहं युष्माकमधिपतिः । न पुनः कदापि वयं कालं नयामः परस्परेषां समागमेन । यूयं**

सततं भीतिग्रस्ता नायाथ मत्समीपम् । न युक्तं मित्रं विना जीवनं जगति । उक्तं च

जाड्यं धियो हरति योजयते हिताय
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १ ॥

अतोऽहमद्यप्रभृति संवृत्तो युष्माकं वयस्यः । एष नः समयो यदस्माभिः सर्वैरैकमत्येन प्रवर्तितव्यं लब्धमात्रं च समं विभाज्यम् ।



अपि संमतमेतद्युष्माकमिति । वृकशृगालतरक्षवः सविनयं सानन्दं चावदन् । 'एवमेतन्महाराज । यद्भवतो मतं तदस्माकं हितम् । अनुगृहीताः स्मो भवतो मित्रत्वेन' । ततः स पञ्चाननोऽब्रवीत् । आनयत तर्हि मृगमेकं येनाद्यैकत्र भोजनं भविष्यत्यस्माकमिति । एतच्छ्रुत्वा तैः पशुभिः कोऽपि पीनो मृगो विश्रब्धेन वचसा

सिंहस्य मित्रत्वं त्वया प्राप्तव्यमित्यानीतस्तस्य समीपम् । क्षणादेव व्यापादयत् तं स वनराजः । शृगालस्तं चतुर्धा विभक्तुं यावत्पुरतोऽगच्छत्तावदुच्चैरवदत् स सिंहः । शृणुत रे सत्त्वाः, मम भागोऽयमिति गृह्णामि प्रथममंशमहम् । द्वितीयोऽपि ग्रहीतव्यो मयैव । यतो मदीयेनैव विक्रमेण हतोऽयं मृगः । एवं तृतीयं शकलं कररूपेणार्पयत यूयं मे प्रकृतयो मह्यम् । तुरीयश्चासौ खण्डो रक्षणीयो मया । यतो विषमोऽयं कालः । आपदर्थे ननु सद्य एवोपायो विधेयः । श्वो यत्किमपि लप्स्यते तस्य समाना भागा अस्माभिर्ग्रहीतव्याः । गच्छताधुना स्वस्वस्थानमिति । अन्येद्युरपि तथैवाचरितं सिंहेन । अनेन क्रमेण स पञ्चाननः प्रतिदिनं विनायासं प्राप्नोत् पर्याप्तं भोजनम् । ततो वृकेणोक्तम् । सखे शृगाल केयं नीतिः । दिने दिनेऽस्माभिरानीतं भक्ष्यमसौ केसरी खादति स्वयमेव । एतादृशेन राज्ञा किमस्माकं प्रयोजनम् । कथयामोऽद्य तस्मै सर्वोऽयं तव व्यवहारो गर्ह्य इति । तरक्षुशृगालौ ततोऽवदताम् । तथा । सम्मत आवयोस्तवाभिप्रायः । त्वामनुसरावस्तत्रेति । अन्येद्युस्तेषां तन्मनोगतं ज्ञात्वा स केसरी तानेव व्यापादयत् ।

कुलीनैः सह संपर्कं पण्डितैः सह मित्रताम् ।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ ३ ॥

**प्रश्नाः**—किमवदत्सिंहः पशून् ? को गुणो मित्रत्वस्य ? कः समयः कृतः सिंहेन पशुभिः सह ? किमर्थं चतुरोऽपि भागान् केसरी पर्यगृह्णात् ? को नामाभिप्रायोऽस्याः कथायाः ?

**अमरकोषे**—वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत् । Friend

**शब्दप्रयोगाः**—द्विधा, त्रिधा, चतुर्धा, पञ्चधा......... । पदार्थो द्विधा—त्रिधा-चतुर्धा—पञ्चधा......विभाज्यः ।

२. अन्येद्युः—पर्याप्तम्—प्रयोजनम् । (वाक्येषु प्रयोजय ।)

३ मित्रम्—मित्रत्वम् । बालः—बाल्यम् ।

स्वामिन्————— । जडः— ।

————सेवकत्वम् । ———काश्यम् ।

उष्णः—उष्णता । सरलः—

# द्वादशः पाठः ।

## अमर्षिणां कपीनाम्

The merciless monkeys

आसीत्कस्मिंश्चिद्वनभागे किमपि वानरयूथम् । तस्य कोऽपि बलिष्ठः कपिनायकोऽभवत् । ते कपयो न कुत्रापि गृहमरचयन् । किंतु भक्ष्यमन्विष्यतां तेषां यत्रैव सन्ध्यासमयोऽजायत । तत्रैव कस्मिन्नपि तरौ नयन्ति स्म ते रात्रिम् । अथ कदाचिद्धेमन्तसमये सरित्तीरे कस्मिन्नपि वृक्षे तैः कपिभिः कृतो रात्रौ वासः । अभूतपूर्वेण हिमवातेन वेपमानान्यासंस्तेषां कलेवराणि । महता क्लेशेन येषां सा रात्रिर्व्यरमत् ।

प्रभातसमये शीततर एव वायुरवहत्तेनासह्यो जातस्तरुनिवासः । अत्रान्तरे भूम्यां दृष्टानि कानिचिद्रक्तानि गुञ्जाफलानि तैर्वानरैः । तानि वह्निकणा इति मत्वा तैः शीतं निवारयितुं तरुतलमवातरन् सहसैव ते प्लवङ्गमाः । गुञ्जाफलानां राशिं कृत्वा फूत्कुर्वन्तः समन्तादतिष्ठंश्च । हासास्पदं तत्तेषां चेष्टितं वीक्ष्य नीडस्थः कोऽपि विहगोऽवदत् । भो भोः, मूर्खतमा एव सर्वे यूयम् । न ते वह्निकणाः किंतु तत्सवर्णानि गुञ्जाफलानि । न तैः शीतरक्षा भविष्यति युष्माकमिति । ततः स कपिवरो-

ऽपृच्छत् । 'कथं रे ज्ञातं त्वयैतद ।' स खगः स्वस्थानात् साटोपं प्रत्यभाषत । युष्माकं हस्तपादं वर्तते । तथापि न कुत्रापि रचितं गृहं युष्माभिः । अहं तु हस्तहीनः सुखं वसामि स्वनिलये ।



तस्मात्कथयामि गुहा वा गिरिकन्दरं वा सेव्यतामिति । ततस्ते वानराः संक्रोधमवदन् । 'कथं रे वक्रवचनेनास्मानुपहससि । किं तवानेन व्यापारेण' इति । भूयोऽपि स पक्षीताननादृत्य पुनः

पुनराह । किं वृथा क्लेशेन। गम्यतां देशान्तरं विरच्यतां वा गृहमिति। तेन भृशं कुपितास्ते कपयोऽब्रुवन्। शिष्टाचारं किंचिदुपदिशामोऽधुना त्वाम्। इत्युक्त्वा चीत्कृत्य तैः प्लवङ्गमैर्नाशितं तस्य विहगस्य निलयं कुलं च । अन्यान्यपि बहूनि नीडानि तत्रासन्। उत्सादितानि तान्यपि तैः।

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ १ ॥

**प्रश्नाः**— किमर्थं न कुत्रापि गृहं वानराणाम्? कस्मिन् काले कपयः पीड्यन्ते? कीदृशो वर्णो गुञ्जाफलानाम्? किमर्थं कुपिता मर्कटाः? किं कृतं वानरैस्तदा?

**समानार्थाः शब्दाः**—अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः । Fire
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥

**(अमरकोषे)** रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।
हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ॥

**वर्णनम्**— के खगा नीडानि रचयन्ति? तानि नीडान्यालिख वर्णय च ।

**द्विकर्मकाणि क्रियापदानि**—

१. याज्ञवल्क्यो जनकं ब्रह्मज्ञानं ब्रूते-शास्ति-शिक्षयति-वा ।
गोपालो धेनुं पयो दोग्धि ।
श्रीवामनो बलिं वसुधां याचते ।
नृपतिश्चोरान् प्रत्येकं शतं दण्डयति ।
पथिको ग्रामस्थं पन्थानं पृच्छति ।
मालाकारो वृक्षान् फलानि पुष्पाणि च अवचिनोति ।
कौरवाः पांडवान् राज्यं भार्यां च जयन्ति ।
देवाः क्षीरनिधिं चतुर्दश रत्नानि मथ्नन्ति ।
चोरो धनिकं सुवर्णशतं मुष्णाति ।

. कृषीवलो ग्राममजां नयति -कर्षति–वहति हरति वा ।

[कारिका] —दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥

[प्रागुक्तेषु वाक्येषु ब्रह्मज्ञानं–दुग्धं–वसुधां–शतं–पन्थानं–फलानि–राज्यं–रत्नानि–सुवर्णशतं–इत्येतानि प्रधानकर्माणि । इतराणि च गौणकर्माणि । चरमे–वाक्ये 'अजां'–इति प्रधानकर्म । 'ग्रामम्–इति–गौणकर्म ।' ]

# त्रयोदशः पाठः ।

## अन्धानां निरीक्षणम् ।

Blindman's sight

जन्मान्धानां स्पर्शेन्द्रियं प्रायः सुतीक्ष्णं भवतीति प्रसिद्धम् । परिचिताः क्रियाः कुर्वन्ति ते लीलयैव । विना स्खलनं च गच्छन्ति यष्टिसहायाः स्थानात्स्थानम् । आगामिनः पुरुषस्य पादाघातं श्रुत्वैव ते तं संविदते । केचिद् ग्रामिका अन्धा गा मेषान् वा इतस्ततो नयन्ति परिपालयन्ति च । अपरे नित्याभ्यासेनानुतिष्ठन्ति सौचिकस्यापि व्यापारम् ।

अथ कस्मिंश्चिद् ग्रामे निवसन्ति स्म षडन्धाः । आत्मनः स्पर्शज्ञाने प्रावीण्यमुद्दिश्य सञ्जाता कदाचित् तेषामहमहमिका । ततस्तैरेवं प्रतिज्ञातम् । गजस्याकारं यः कोऽपि यथार्थं वर्णयति स एवास्मासु श्रेष्ठ इति । स्पर्शमात्रेणैवासौ हस्ती वर्णनीयः । न कस्याप्यन्यस्य साहाय्यं ग्रहीतव्यमिति । तदनुरोधात् तेऽन्धाः प्राप्ता गजस्य समीपम् । प्रथमो यावदुपसर्पति तावत्करिण उदरं सोऽस्पृशत् । ततः स उच्चैरवदत् । 'अहो भित्तिरेवैषा दृश्यते । भित्तिरूपो ननु गजः' इति । द्वितीयेन धृतस्तस्य पशोः पादः

उक्तं च। 'अहो स्थूलतास्य स्तम्भस्य। स्तम्भरूपः खलु गजः' इति। तृतीयेन करे प्राप्तं हस्तिनो लाङ्गूलम्। तदासावुदगिरत्। 'आश्चर्यं भोः, रज्जुरेवेयमिति मन्ये। असंशयं रज्जुरूपोऽयं कुञ्जरः' इति। चतुर्थो हस्तेन गृहीतवान् नागस्य कर्णम्। ससंभ्रमं तेनोद्घोषितम्। 'हन्त, विस्तृतमेतद्व्यजनम्। व्यजनरूपोऽयं मातङ्ग इति मे निश्चयः' इति। पञ्चमो गजस्य शुण्डामवलम्ब्य प्राख्यापयद् दीर्घस्वरेण। 'अये, विशालोऽसौ सर्पोऽत्र विलुठति। अहिरूपोऽसौ करीति मे मतिः' इति। अन्ततः षष्ठोऽन्धस्तस्य वारणस्य रदं धृतवानुच्चैरवदच्च। 'अहो निशितः कठिनश्चायं शूलः। शूलरूप एव द्विरद इति नात्र संशयः' इति। अनन्तरं ते सर्वे व्याचक्षत स्वमतं तारस्वरेण न चामन्यन्त परमतम्। तेन सुचिरं प्रावर्तत तेषां महान् विवादः। एवमपूर्वं किमपि तेषां निरीक्षण-कौशलं ज्ञात्वा भृशं विनोदमन्वभवन् सर्वे ग्रामवासिनो जनाः।

**प्रश्नाः**—किमिन्द्रियं सुतीक्ष्णं जन्मान्धस्य? कीदृशानि कार्याणि कुर्वन्ति जन्मान्धाः? कः समयः कृतः षड्भिरन्धैः? कीदृशानि तेषां मतानि गजमुद्दिश्य?

**अमरकोषे**—दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः। elephant
मतङ्गजो गजो नागः कुञ्जरो वारणः करी॥

**उपसर्ग-कार्यम्**—१ वद्-प्रवद्-अपवद्-संवद्-विवद्-प्रतिवद्।
२. वृत्-विवृत्-प्रवृत्-निवृत्-परिवृत्।

(एतानि क्रियापदानि वाक्येषु प्रयोजय।)

द्विकर्मक-धातूनां-कर्मणि-प्रयोगः—

१. याज्ञवल्क्येन जनको ब्रह्मज्ञानं उच्यते-शिष्यते-शिक्ष्यते-अध्याप्यते वा

२. गोपालेन धेनुर्दुग्धं दुह्यते। श्रीवामनेन बलिर्वसुधां याच्यते। नृपतिना चोराः शतं दण्ड्यन्ते। पथिकेन ग्रामस्थः पन्थानं पृच्छ्यते। मालाकारेण वृक्षाः फलानि पुष्पाणि च अवचीयन्ते। कौरवैः पाण्डवा राज्यं भार्या च जीयन्ते। देवैः क्षीरनिधिश्चतुर्दश रत्नानि मथ्यते। चोरेण धनिकः सुवर्णशतं मुष्यते।

( गौणकर्मणः प्रथमा विभक्तिः प्रयुज्यते। )

३. कृषीवलेन ग्राममजा नीयते–ह्रियते–कृष्यते–उह्यते वा।

( अत्र तु प्रधानकर्मणः प्रथमा विभक्तिः प्रयुज्यते। )

# चतुर्दशः पाठः।

## अनृतभाषिणो मेषपालस्य।

The Lying Shepherd

आसीदेकस्मिन् ग्रामे कश्चिन्मेषपालः। स कदाचित् सुदूरमनयत् स्वयूथम्। बहवो वृक्षास्तत्रासन् निबिडा च तेषां छाया। रविकिरणा अपि क्वचित्क्वचिदेव प्रवेशमलभन्त तस्मिन्स्थाने। मध्याह्नेऽपि सुशीतलं तत्स्थलम्। विपुलानि तृणपर्णानि निर्मलाश्च बहवो निर्झरा आसन् स्थाने स्थाने। तत्र कस्यचित्तरोर्मूले विश्रान्तिमनुभवतस्तस्य यूनो मनसि समुत्पन्नः सहसैवैष विचारः। निर्जनमेतद्वनम्। यदि कश्चिद्वन्यपशुरत्रापतेत् तर्हि किं करिष्यामि। असहायोऽहमेतैर्मेषैः सह नस्य भक्ष्यमवश्यं भविष्यामि। परीक्षे तावद्यदि कोऽपि मानुषोऽत्र समीपे तिष्ठति न वेति। एवं संप्रधार्य 'भो भो, वृक इहायातः, वृक इहायातः' इत्युच्चैराक्रोशत्स युवा। एतच्छ्रुत्वा समीपस्थाः क्षेत्रपालाः शस्त्राण्यादाय तत्र प्राप्ताः सत्वरं साहाय्यार्थम्। तान् दृष्ट्वा प्रीतमनाः स मेषपालोऽवदत्। नात्र वृकः परं समीपे जनानां निवासो विद्यते न वेति ज्ञातुमेवाहं तथाक्रोशमिति। एतद्वचनं निशम्य

यथागतं निवृत्तास्ते कृषीवलाः । अन्येद्युस्तथैव विनोदार्थं स आक्रोशत् । पुनरपि शस्त्रपाणीन् जनानागतान् दृष्ट्वासौ पर्यहसद् वृको नास्तीति चावदत् । इत्थं बहुवारं वञ्चितास्ते प्रातिवेशिकास्तेन मिथ्यावादिना ।



अथैकस्मिन् दिने परमार्थत एव तत्रायाताः केचिद् वृका मेषाणां गन्धेनाकृष्टाः । तान्दृष्ट्वा भीतिग्रस्तः स युवा 'वृका आयाता वृका आगता' इत्याक्रोशत् । यथापूर्वमुच्चैः समाह्वयच्च प्रातिवेश्यान् । परं तत्राद्य न यामो यतः स दुर्मतिरस्मान् वञ्चयति परिहसति चेति तैः प्रातिवेशिकैर्मिथो निश्चितम् । अथ साहाय्यार्थमनागतेषु

जनेषु वृकैर्भक्षिता बहवो मेषाः । स पालकोऽपि किंचित्पीडितः एवमनृतभाषिणस्तस्य प्राप्तो दण्डः ।

> नासत्यवादिनः पुण्यं न सख्यं न यशो भुवि ।
> दृश्यते नापि कल्याणं कालकूटमिवाश्नतः ॥ १ ॥

**प्रश्नाः**— कुत्र नीता मेषाः पालकेन? किमर्थमाक्रोशत्स प्रथमम्? किं कृतं तैः प्रातिवेशिकैः? कि चेष्टितं वृकैः? किमर्थं नागताः सहायास्तदा?

**शब्दप्रयोगाः**—१. अनागतेषु जनेषु वृकैर्भक्षिता मेषाः ।
सम्प्राप्ते कृष्णसख्ये पाण्डवा यशोऽलभन्त ।
सम्पादिते सुग्रीवसख्ये रामो रावणमहन् ।
२. पश्यतो मेषपालस्य वृकैर्भक्षिता मेषाः ।
रुदतो बालकस्य पिता गृहान्निर्गतः ।

(विशदीकरणम्)—१. यतस्ते जनास्तत्र नागच्छंस्ततो वृका बहून् मेषान् व्यापादयन् । (इत्थं सर्वेषां वाक्यानामर्थो विशदीक्रियताम् ।)

**उपसर्गकार्यम्**—'ग्रह् - विश् - पत' इत्यादीना धातूनामर्था उपसर्गैः कथं भिद्यन्ते तदुदाहरणैर्दर्शयत ।

**समासः**—अनृतं भाषते - इति अनृतभाषी । गुणान जानाति - इति गुणज्ञः । मेषान् पालयति - इति मेषपालः । ग्रामे तिष्ठन्ति - इति ग्रामस्थाः । अवन्या रोहति - इति अवनिरुहः । (**उपपद-तत्पुरुषः समासः**)

शक्ति - Physical strength

# पञ्चदशः पाठः ।

युक्ति - mental

## युक्तिः शक्तेर्गरीयसी ।

Resourcefulness is greater than strength

**पञ्चभूतेषु वायुः प्रधानत्वेन प्रसिद्ध एव । तेन विना प्राणिनां जीवनं न शक्यम् । रविरपि तेजोरूपो जनानामुपकारको वर्तते ।**

अथ कदाचित् सञ्जातस्तयोर्विवादः । मम शक्तिरधिका मम शक्तिरधिकेत्येकैकोऽवदत् प्रमाणानि चाकथयत् स्वमतं समर्थयितुम् । मारुतोऽब्रवीत् । अहमुन्मूलयामि प्रबलानपि तरून् । मया निर्जिता इन्द्रादयो देवा अपि । मत्पुत्रो हनुमानतीव विक्रान्तो जगद्विख्यातो वीरः । त्वद्विना जीवन्ति प्राणिनो न पुनर्मद्विनेति ।



एतदाकर्ण्य चण्डरश्मिरभाषत । तृणान्यपि त्वमुन्मूलयितुं न समर्थः । अदृश्यं त्वद्रूपम् । अहं पुनर्जगत्त्रयं प्रकाशयामि स्वतेजसा । ममोष्णतयैव जीवन्ति जन्तवो रोहन्ति च वनस्पतयः । कर्णादयो वीरा मे प्रसादाज्जगज्जेतुं क्षमा इति । अत्रान्तरे

तयोर्दृष्टिपथमागतः कम्बलवान् कोऽपि पान्थः । ततस्तौ सममन्येतां यद् योऽस्य कम्बलं निःसारयति स एव श्रेयानिति ।

तदादौ पवनोऽग्रेसरोऽभवत् । स यथा यथा कम्बलमपहर्तुं प्रबलं प्रावहत् तथा तथा स पथिको दृढतरं कम्बलं प्रावृणोत् । ततो महतावेशेन वायुरवहत् । सन्निधौ स्थितास्तरवोऽकम्पन्त ।



महीधरा अपि किंचिदचलन् स्वस्थानात् । स पान्थोऽपि चालितः स्थानात्स्थानम् । परं कम्बलं दृढतममेव धृतवान् । एवं चिरेणापि तस्य शरीरात् कम्बलमाक्रष्टुं नाशक्नोत् प्रभञ्जनः । खिन्नवदनः स तदापसृतः ।

ततो मरीची पुरतोऽभवत्। शनैः शनैः च चण्डमतपत्। यथा यथा तीव्रतरा अभवंस्तस्य किरणाः, तथा तथासह्योऽभवत्स शरीरदाहस्तस्य पथिकस्य। अचिरादेव घर्मावृतं शरीरं वीक्ष्य कम्बलमपाकरोत् स पान्थः। उपाविशद् निकटवर्तिनो वृक्षस्य छायायाम्। प्राक्षिपच्च कम्बलं भूमौ। एवं सवित्रा लीलयैव जितोऽसौ समयः।

पक्षिणां बलमाकाशो मत्स्यानामुदकं बलम्।
मारुतस्य बलं वेगस्तरणेरातपो बलम्॥ १॥

**प्रश्नाः**—कीदृशं बलं सूर्यस्य? कथं बलवान् भवति वायुः? कः समयः कृतस्ताभ्याम्? कस्मात्कारणाद्वायोः प्रयत्नो विफलो जातः? कथमात्मान उद्देशः साधितो भास्करेण?

**अमरकोषे**—१. सरसूर्यार्यमाऽऽदित्य-द्वादशात्मा-दिवाकराः – Sun
भास्करः सविता भानु-प्रभाकर-विभाकराः॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः।
सहस्रांशू रविर्हंसो मार्तण्डारुणपूषणः॥
२. गन्धवाहानिलौ वायुर्मातरिश्वा सदागतिः। – wind
समीरमारुतमरुत्-प्रभञ्जनसमीरणाः॥

**समानार्थाः शब्दाः**—'सूर्यः', –'वायुः'–इत्यर्थे सर्वान् शब्दान् कथय।

**पुराण-कथा**—हनुमतो जन्मनः कर्णस्य पराक्रमस्य च कथे कथय।

**समासाः**— सूर्यश्च वायुश्च–वायुसूर्यौ।
रामश्च लक्ष्मणश्च भरतश्च शत्रुघ्नश्च–राम-लक्ष्मण-
द्वंद्व भरत-शत्रुघ्नाः।
माता च पिता च–मातापितरौ पितरौ वा।
मयूरश्च मयूरी च–मयूरौ। (एकशेषवृत्तिः।)

**समाहार-द्वंद्वः**

पाणी च पादौ च पाणिपादम्
आहारश्च निद्रा च भयं च—आहारनिद्राभयम् ।
रथिकाश्च अश्वारोहाश्च—रथिकाश्वारोहम् ।
(एतानि पदानि समाहारं दर्शयन्ति ।

# षोडशः पाठः ।

## उद्यमे सिद्धिः प्रतिवसति ।

अथ कदाचित् तृषार्तः कोऽपि वायसो जलमधिगन्तुं सुचिरमभ्रमत् स्थानात्स्थानम् । परं न कुत्रापि तत् प्राप्तवान् । ततः शुष्कवदनः परिश्रान्तश्चासौ प्राप्तः किमप्युद्यानम् । तत्र हि



भाग्येन दृष्टवान् जलकुम्भम् । उपविश्य च तस्योपान्ते जलं पातुमयतत । किन्तु स्वल्पमेव जलमासीत्तस्मिन् घटे । तेन तत्प्रति वञ्चुं नेतुं स नाशक्नोत् । एवमाशानिराशाभ्यां सङ्कुलमभवत् तस्य

चित्तम्। किमत्र क्रियताम्। उपलब्धमप्युदकं पातुं न शक्नोमीति दैवस्य विपरीता गतिः। को नु खलूपायो विधेयोऽत्र। इति विचार्य तं कुम्भं भूमौ निपातयितुं तेन यत्नः कृतः। परं गुरुरासीत् स कुम्भः। तेन विफलोऽभवत्तस्य परिश्रमः। तदा भूमौ निःसंज्ञ इवापतत् खिन्नवदनोऽसौ ध्वाङ्क्षः।

ततः कियतापि कालेन संज्ञां लब्ध्वा पुनरुपाविशत् स वायसो घटोपान्ते। अन्तर्भागे च यत् स्तोकमुदकमासीत्तस्मिन्नुपलं चञ्च्वोद्धृत्य व्यसृजत्। तेनोत्सारिताः कतिचिज्जलकणा आस्पृशंस्तस्य वदनम्। हन्त भोः, अनेनैव क्रमेण जीवनमुपलभेय। इत्युक्त्वा जाताशः स ध्वाङ्क्षः पुनः पात्रे व्यसृजत् कांश्चिदुपलान्। अचिरात् कुम्भस्याकण्ठमुदगच्छत् तलस्थं तत् सलिलम्। तदा परितुष्टेन मनसा स तदपिबत्। पर्याप्तं जलं पीत्वा सोऽभाषत। अहो, उद्यमस्येदं फलम्। प्राणिभिः सततमुद्यमशीलैर्भाव्यम्। कदा कथं वा प्रयत्नः सफलो भविष्यतीति न प्रथमं ज्ञायते।

उद्यमं साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः।
षडेते यत्र वर्तन्ते तत्र देवः सहायकृत्॥ १॥

पूर्वजन्मजनितं पुराविदः कर्म दैवमिति सम्प्रचक्षते।
उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम्॥ २॥

**प्रश्नाः**—केनाकुलः स काको जातः? किं दृष्टं तेनोद्याने? जलं पातुं किमकरोत्स प्रथमम्? कथं सापरा युक्तिरुपस्थिता तस्य मनसि? केनोद्गतं जलम्?

**अमरकोषे**—काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः। Crow
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि॥

**परीक्षणम्**—'यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।
एवं विना प्रयत्नेन क्वापि दैवं न सिध्यति'॥

एषा नीतिरेव कोऽपि निकषः। तेन परीक्षस्व वायसस्य कथाम्।

**शब्दप्रयोगाः**—१. उद्योगं-उद्योगेन-उद्योगात् वा विना दैवं न सिध्यति।
जलं-जलेन-जलात् वा विना तृषा न शाम्यति।
चक्रद्वयं-चक्रद्वयेन-चक्रद्वयात् वा विना रथो न गच्छति।

२. कुम्भे जलं आकण्ठं उदगच्छत्। (कण्ठपर्यन्तम्)। सज्जनाः आमरणं सच्छीलं आचरन्ति। आमध्याह्नं तपस्तप्यते मुनिभिः प्रतिदिनम्।

३. जन्मप्रभृति मार्जारस्य गौर्नास्ति (जन्मनः आरभ्य)। सीताया विवाह-प्रभृति रामरावणयोर्वैरमापतितम्। स्वप्नप्रभृति बुद्धो मानुषाणां दुःखस्य निवारणमचिन्तयत्।

**समासाः**—१. चतुरश्चासौ वायसः च —चतुरवायसः। (**कर्मधारयः**)

| | | |
|---|---|---|
| नीलं च तदुत्पलं च | —नीलोत्पलम्। | ,, |
| चरणं कमलं इव | —चरणकमलम्। | ,, |
| मुखं चन्द्रः इव | —मुखचन्द्रः। | ,, |
| घनः इव नीलः | —घननीलः। | ,, |
| २. जलस्य कुम्भः | —जलकुम्भः। | (**षष्ठी-तत्पुरुषः**) |
| नयनस्य पन्थाः | —नयनपथः। | ,, |
| रवेः रश्मयः | —रविरश्मयः। | ,, |
| राज्ञः पुरुषाः | —राजपुरुषाः। | ,, |
| कृष्णस्य सखा | —कृष्णसखः। | ,, |
| विदेहानां राजा | —विदेहराजः। | ,, |

(एतेषु समासेषु 'पथिन्'-'सखि'-'राजन्'-इत्यादीनां 'पथः'-'सखः'-'राजः'-इति रूपाणि भवन्ति।)

# सप्तदशः पाठः।

## आज्ञानुवर्ती हीरकः। The disciplined Elephant Heraka

**अनुशिष्टो गजो भवति सौम्यश्चतुरश्च। राजगृहस्य भूषणं विभवस्य लक्षणमधिकारस्य च मूर्तिरेव स प्रतिभाति। उत्सवे**

सङ्ग्रामे च धीरं चलत्यसौ सदैवाग्रभागे। बहवः कथाः श्रूयन्ते



गजस्य चातुर्यस्य धैर्यस्य च।

पुरा किल कस्यापि नृपतेरासीद् हीरको नाम गजः। अनुशासनेन सोऽभवदतीव सुशील आज्ञाधीनश्च। यद्यदाज्ञापयत् तस्य पालकः तत्तत् शीघ्रमन्वतिष्ठत् सः। पालकस्य भार्या कुमारश्च तस्य सविशेषं परिचितौ स्नेहेन तमपोषयताम्। अथैकदा कोऽपि शत्रुरभ्यद्रवत् तं नृपतिम्। तेन सह योद्धुं नगराद्बहिरनयत् स राजा चतुरङ्गयुतां स्वसेनाम्। स्थाने स्थाने च स्थपितवान् विक्रान्तान् योधान्। समरभूमेरुन्नते मध्यभागे स्थापितो हीरकः। तस्य पृष्ठे व्यराजत रौप्यमयमासनं राजचिह्नाङ्किता च पताका। हस्तिपको हीरकस्य मस्तकेऽङ्कुशं गृहीत्वोपाविशत्। अचिरादेवारब्धं युद्धम्। अत्रान्तरे हीरकस्य चालको निशितेन बाणेनोरसि विद्धः सन् तस्मिन्नेव क्षणे मृतः। किंचित्पराङ्मुखीभूतं च नृपस्य सैन्यम्। अरिभिर्वेष्टितोऽभवद् हीरकः। परं स्वस्थानान्नैकमपि पदमचलत्। चालकस्य न काप्याज्ञा तेन श्रुता तस्मात्तत्रैव स्थातव्यमिति तस्य निश्चयः। ततस्तेन नृपतिना दूरात्स हीरको दृष्टः। तदा स्वसैनिकानुद्दिश्य सोऽवदत्। धिग्युष्मान् रे भीरवः। पश्यत पशुरपि स हीरकः स्वस्थानान्न चलति। कथं तर्हि पताकां त्यक्त्वा समरान्निवृत्ता यूयम्। गच्छत पुनरेकदा रिपुसंहारं कृत्वा हीरकं पताकां चानयत। इत्येतन्नृपवचनं श्रुत्वा रिपुसैन्ये स्वपताकां च दृष्ट्वा सोत्साहं सरभसं च शत्रुं प्रत्यभ्यद्रवंस्ते सैनिकाः। अनपेक्षितेन तेनापातेनोत्सादितं तच्छत्रुसैन्यम्। पुनश्च स्वजनैर्वेष्टितोऽभवत् स हीरकः। धन्योऽसौ धीरः पशुर्येनैवं निर्जितः शत्रुः।

गले पाशस्तीव्रश्चरणयुगले गाढनिगडो
दृढं स्कन्धे बन्धः शिरसि सृणिपातः खरतरः।
नरः पृष्ठारूढो बत मरणयोग्येऽपि विषये
न जानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः ॥ १ ॥

**प्रश्नाः**—कीदृशः स्वभावो वारणस्य? क उपयोगः करिणः सङ्ग्रामे? किमासीद्धीरकस्य पृष्ठे? किमर्थं नाचलत्स्वस्थानाद्धीरकः।

**वर्णनम्**—युद्ध-चित्रस्य वर्णनं किंचित् कुरुत।

**अमरकोषे**—युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्। Battle
मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम्॥
अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः॥
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः॥

**शब्दप्रयोगाः**—अधिक्षिप्। अभिद्रु। अनुतिष्ठ्। धिक्। सह। सम्मन्। अवमन्। प्रतिमन्।—(विविधेषु वाक्येषु शब्दाः एते प्रयोक्तव्याः।)

**समासाः**—१. त्रयाणां भुवनानां समाहारः—त्रिभुवनम्। **'द्विगुः'**
नवानां रात्रीणां ,, —नवरात्रम्। ,,
२. वासुदेवं श्रितः—वासुदेवश्रितः। **(द्वितीया तत्पुरुषः)**
वैभवं आपन्नः—वैभवापन्नः।
देवलोकं गतः प्राप्तो वा—देवलोकगतः-प्राप्तो वा ,,
मुहूर्तं सुखम्—मुहूर्तसुखम्। ,,
वर्षं भोग्यः—वर्षभोग्यः ,,

---

# अष्टादशः पाठः।

## शठे शाठ्यं समाचरेत्।

To the wicked apply wickedness

अथैकदा सरितस्तीरमगच्छत् कश्चिज्जम्बूकः। तत्र च जले स्थित्वा मुहुर्मुहुर्मत्स्यान् भक्षयन्नासीत् कोऽपि सारसः। तीरस्थं जम्बूकं दृष्ट्वा स तस्मै प्रायच्छत् कतिपयान् मत्स्यान्। इत्थं तयोर्जम्बूकसारसयोः सञ्जाता मैत्री। तत्रागच्छज्जम्बूकः प्रत्यह-

मभक्षयच्च मत्स्यान् । अनन्तरं स्वभावकुटिलत्वात् स शृगालः कदाचिदचिन्तयत् । लघूनेव मत्स्यानसौ ददाति मह्यं स्वयं तु भक्षयति पृथुतरान् । अतः केनाप्युपायेन नेष्यामि तं जनस्योपहास्यताम् इति । तदनुरोधादेकस्मिन् दिने स शृगालस्तं सारसं गृहे भोजनाय न्यमन्त्रयत । तेन सारसेन स्वीकृतं तद्वचनं विमलात्मना । ततः किंचित् पायसं स्थाल्यां निधाय स जम्बूकः परिहासकाम्यया तत्पात्रं तस्य पुरतोऽस्थापयत् । तस्मादुत्तानात् पात्रात् क्षीरलवमप्यास्वादयितुं न क्षमोऽभवत् स बकः। शृगालस्तु क्षिप्रं तत्सर्वमलेट् । तेन व्रीडाभिभूतः सोऽतिथिः सत्वरं गृहमडयत ।





क्रोष्टुस्तत् कौटिल्यं न कदापि व्यस्मरत् सारसः । ततः कतिपयैर्दिवसैः स तं भोजनार्थमाहूतवान् । आम्ररसमालिञ्जरे निक्षिप्य न्यदधाच्च तस्याभ्यागतस्य पुरतः । उन्नतोऽसौ घटः प्रतनुश्चासीत् तस्य कण्ठः । जम्बूकस्य मुखप्रवेशस्य नाभवत्

तत्रावकाशः । ततः स बक आत्मनो दीर्घां चञ्चुं घटान्तः प्रवेश्यैवं खादितव्यमिति न्यदर्शयत् तस्मै । अनेन क्रमेण स्वयमेव स यथेष्टं निपीतवान् तमाम्ररसम् । तस्य प्राशनकाले ये बिन्दवो घटस्योपरि पतितास्तानेव वारंवारमालिह्य समाहितोऽभवत् स वञ्चकः । परं हृदि क्रोधेनासीद् भृशं सन्तप्तः । अपि मधुरोऽयमाम्ररसः। पर्याप्तं च तव भोजनं जातमिति सारसेन सोत्प्रासं पृष्टोऽसौ क्रोष्टा विलक्षो भूत्वा निर्गतस्तस्मात् स्थानात् ।

**स्वकृतस्यैव शब्दस्य प्रतिध्वनिः श्रूयतेऽन्यत्र ।**

**प्रश्नाः**—कीदृशात्पात्रात्सुलभं भवति भक्षणं पानं वा चतुष्पदानाम् ? कीदृशात्पुनः पक्षिणाम् ? किमर्थं शृगालस्य मनसि मत्सरः सञ्जातः ?

**अमरकोषेः**—शिवा स्त्रियां भूरिमायगोमायुमृगधूर्तकाः । Jackal
शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ।

**शब्दप्रयोगाः**—भक्ष् - खाद् - ग्रस् - पिब् - चुष् - शुष् - लिह् - इत्यादीन् वाक्येषु प्रयोजय । भक्ष्य - पेय - चोष्य - लेह्य-पदार्थानां नामानि कथय ।

**समासाः**—क्रकचेन पाटितम्—क्रकचपाटितम् । (तृतीया-तत्पुरुषः)

१. शरेण विद्धम्—शरविद्धम् । ,,

२. मासेन पूर्वः—मासपूर्वः । ,,
वाचा कलहः—वाक्कलहः । ,,
लज्जया हीना—लज्जाहीना । ,,

३. हरिणा त्रातः—हरित्रातः । ,,
नखैः भिन्ना—नखभिन्ना । ,,
दध्ना (युक्तः) ओदनः—दध्योदनः । ,,

# नवदशः पाठः ।

### त्री विनश्यति ।

अथ कश्चिन्मार्जारो मूषकाननुधावन् प्राप्तः किमपि क्षेत्रम् । तत्र यावदाखुमेकं धृत्वा तिष्ठत्यसौ ग्रसनपरः, तावत्सस्यं भक्षयितुं तदेव स्थानमुपागतः कोपि जम्बूकः । तत आत्मनः क्षुधां प्रशाम्य तौ परस्परमवदताम् । स्वागतं भो मित्र । एतदेकमेव स्थलमावयोः क्षुधानिवृत्तेः । तेन स्वभावत एव सुहृद्भावो विद्यते खल्वावयोः । इत्यन्योन्यमभिनन्दन्तौ तौ मूलमयातौ निकट-वर्तिनो वृक्षस्य । तत्र विविधान् विषयानुद्दिश्य मुहूर्तं तौ गोष्ठी-



सुखमन्वभवताम् । कथाप्रसङ्गेन जम्बूकोऽभाषत । यदि किंचिद् व्यसनमत्रोपतिष्ठेत्तर्हि किं करिष्यसि सखे बिडाल । कथमात्मानं रक्षिष्यसि । अहं तावज्जानामि सहस्रं रक्षोपायान् । परं त्वदर्थे

various

चिन्तापरं मे मन इति । मार्जारोऽकथयत् । सखे शृगाल, सम्यग् जानामि युक्तिमेकाम् । सा विफला चेत् प्राप्स्यामि दुर्गतिम् इति । तदाकर्ण्य स गोमायुः सखेदमाह । अहह बलवती मे चिन्ता मन्दभाग्यस्य तव कृते । शिक्षयामि त्वामन्याः काश्चन युक्तीः । इति यावत् सोऽवदत्तावत् तत्र प्राप्ताः केऽपि सारमेया व्याधाश्च । तान् दृष्ट्वा सत्वरं वृक्षशिखरमारोहत् स बिडालः । स वञ्चकस्तु बुद्धिचातुर्यं प्रदर्शयितुं का युक्तिरधुना विधेयेति विचारयन् यावच्चलचित्तस्तिष्ठति तावदाक्रान्तः स तैः सारमेयैर्व्यापादितश्च ।

**प्रश्नाः**—कथं स्वजीवनं साधयति मार्जारः? किमर्थं सुहृद्भावो बिडाल-शृगालयोः? कीदृशं तयोः सम्भाषणम्? कीदृशी चिन्ता गोमायोः? किमर्थं न शक्तः स्वरक्षणे स क्रोष्टा?

**अमरकोषे**—कौलेयकः सारमेयः कुक्कुरो मृगदंशकः । dog

शुनको भषकः श्वा स्यात् ॥

**समानार्थाः प्रयोगाः**—(कर्तरि) (कर्मणि)

| (कर्तरि) | (कर्मणि) |
|---|---|
| बिडालो जीवनयात्रामसाधयत् । | बिडालेन जीवनयात्राऽसाध्यत । |
| बिडालो जीवनयात्रां साधितवान् । | बिडालेन जीवनयात्रा साधिता । |

[अनेन प्रकारेण 'शिक्ष्'—'रक्ष्'—'कथ्'—इत्यादीनां तादृशानि रूपाणि वाक्येषु प्रयोजय]

**समासाः**—कौपीनाय वस्त्रम्—कौपीनवस्त्रम् । (चतुर्थी-तत्पुरुषः)

बालाय इदं (दुग्धम्) —बालार्थं (दुग्धम्) ,,

गुरवे रक्षितम्—गुरुरक्षितम् । ,,

**शब्दप्रयोगाः**—१. कुक्कुरेभ्यः प्राणान् बिडालो वृक्षारोहणेनारक्षत् । दुर्जनात्स्वरक्षा विवेकेन सम्पाद्या । सुग्रीवं रामचन्द्रो वालेररक्षत् ।

२. बिडालस्य कृते चिन्ताग्रस्तः शृगालोऽभवत् । सीतायाः कृते सुवर्णमृगं धर्तुं रामोऽधावत् । अमीषां प्राणानां कृते यतन्तेऽखिला जन्तवः ।

# विंशः पाठः।

## राजार्थिनां भेकानाम्।

Frogs request for a king

—∞∞—

कस्मिंश्चित् कासारे न्यवसन् बहवो भेकाः। तेषु केचिदासन् स्थूला अपरे च लघवः। अथ कदाचित् समेत्य ते सर्वे मिथोऽमन्त्रयन्त। नैतद्युक्तं यद्वयं स्वैरमितस्ततश्चरामो यथेष्टं च व्यवहरामः। उक्तं च—



स्वैराचारेण जीवानां न शुभा गतिरीक्षिता।
निग्रहेणेन्द्रियाणां तु निश्चिता परमा गतिः॥ १॥

तस्माद्यद्यस्माकं कोऽपि स्वामी भवेत्तर्हि समीचीनं स्यात्। वयं वर्तिष्यामहे तस्य तन्त्रेण। स चास्मानुन्मार्गान्निवार्य सन्मार्गे

प्रेरयिष्यतीति । ततस्तैर्दर्दुरैः प्रार्थितो भगवान् विष्णुः । भोः परमेश्वर, कमपि राजानं प्रेषय योऽस्माकं हिताय भवेदिति । तेषां प्रार्थनामङ्गीकृत्य श्रीहरिर्दारुखण्डमेकं वियतोऽपातयत् तस्मिंस्तडागे । तस्मिन् पतिते सञ्जातो महानाघातः । उत्फालितं च समन्ताज्जलम् । तेनेतस्ततः कासारतटेऽप्लवन्त संत्रस्ताः सर्वे मण्डूकाः । अचिरान्निश्चलोऽभवत् च दारुखण्डः । तदा तं राजानमुपागच्छन् शनैः शनैस्ते दर्दुराः । अनन्तरं तस्योपर्युत्प्लुत्य ते तत्र स्वैरमक्रीडन् । तथापि निश्चेष्टं तमधिपं वीक्ष्य भकैर्मन्त्रितम् । हन्त, अचेतनोऽयं खलु राजा । नासावस्माकं निग्रहणायालम् । अस्मात् साधुतरः कार्यक्षमश्च प्रभुर्याचनीय इति ।

ततः पुनरपि लक्ष्मीनायकं ते पूर्ववत् प्रार्थयन्त । तदा भगवता नारायणेन प्रेषितः क्रौञ्चः । आगतमात्र एव स मण्डूकानेकैकशो विदार्यात्तुं प्रावर्तत । प्रत्यहं सोऽभक्षयद् बहून् मण्डूकान् । अचिरात् तेनालोडितोऽखिलोऽसौ तडागः । तं स्वकुलनाशमसहमानास्ते भेकाः पुनश्च प्रार्थितवन्तो देवदेवं श्रीकेशवम् । अयि भगवन्, नाशयत्यसौ क्रौञ्चोऽस्माकं कुलम् । इतोऽन्यः कश्चन राजा प्रेष्यतामिति । तदाकर्ण्य न किंचित् प्रतिवचनं दत्तं भगवता विष्णुना ।

jasmine

गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां
तां दृष्ट्वाशु गतः स चन्दनवनं पश्चात्सरोजं गतः ।
moon बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः
contentment सन्तोषेण विना पराभवपदं प्राप्नोति सर्वो जनः ॥ १ ॥

प्रश्नाः—कत्यवस्था भेकस्य जीवनक्रमस्य ? किमर्थं मण्डूकैः श्रीहरिः प्रार्थितः ? कीदृशा गुणा दारुखण्डस्य ? किमकरोत्स बकः ?

**समासाः**—चोराद् भयम्—चोरभयम्। (पञ्चमी-तत्पुरुषः)

बन्धात् मुक्तः—बन्धमुक्तः। ,,

स्वर्गात्पतितः—स्वर्गपतितः। ,,

**अमरकोषे**—भेको मण्डूकवर्षाभूशालूरप्लवदर्दुराः। Frog.

## तडागवर्णनम्।

Description of a tank

तडागतोयं मधुरं प्रसन्नं
स्थिरं गभीरं घननीलवर्णम्।
तडागतीरं तरुभिः परीतं
प्रवासखिन्नान् ह्वयतीव पान्थान्॥ १॥

पिबन्ति पद्मेषु मधु द्विरेफाः
खादन्ति वृक्षेषु खगाः फलानि।
जलेषु मत्स्या विहरन्ति नित्यं
छायासु पान्थाः सुखमारमन्ति॥ २॥

रटन्ति भेकास्तटमाश्रिता ये
गुञ्जन्ति भृङ्गाः कमलेषु मञ्जु।
निन्दां स्तुतिं वाऽगणयन्नमीषां
परोपकारे निरतस्तडागः॥ ३॥

**परीक्षणम्**—किं वर्णितमेषु श्लोकेषु? एतेषां श्लोकानां पठनेन को भावः समुत्पद्यते युष्माकं मनसि? के शब्दाः का वा पङ्क्तयो रम्यतमा दृश्यन्ते? का नाम स्तुतिस्तडागस्य? का वा निन्दा?

**अमरकोषे**—पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः। Lake

समासाः—सभायां पण्डितः—सभापण्डितः (सप्तमी तत्पुरुषः)

सम्भाषणे पटुः—सम्भाषणपटुः। „

अग्नौ पक्वम्—अग्निपक्वम्। „

क्रीडायां कुशला—क्रीडाकुशला। „

# एकविंशः पाठः।

## भुजङ्गमसख्यम्।

Friendship with snake

पुरा किल पुत्रवत्सला काचिद्वनितावसदेकस्मिन् क्षेत्रे। त्रिवर्षदेशीयस्तस्याः कुमारः क्रीडापरः सदा खेलन्नास्ते गौवत्सैरजाशिशुभिः खगशावैश्च। भोजनसमयेऽपि न तिष्ठति स



एकस्मिन् स्थाने। खाद्यपात्रं गृहीत्वा बहिर्गच्छति निकुञ्जं तत्र च भुङ्क्ते मित्रैः सह।

अथ कदाचित् स बालको मातरमवदत्। 'अयि अम्ब, नवीनः

खलु कोऽपि वयस्यो मया सहागच्छति संप्रति भोजनाय। अतीव मसृणं चित्रितं च तस्याङ्गं मनोहरं च वदनम्। तदर्थं प्रयच्छ किंचिदधिकं क्षीरम्। तदेव बहु रोचते तस्मै' इति। तदाकर्ण्य सा नारी सकुतूहलमगदत्। 'नैतद्वत्स युक्तं ते सर्वेभ्यो भक्ष्यप्रदानम्। न वयं खलु धनिकाः'। इत्युक्त्वा पुत्रप्रेम्णा मोहितया तयाधिकं क्षीरं दत्तमेव। तदादाय निकुञ्जं प्रयातः स कुमारः सहर्षं प्लवन-मग्यैव गत्या। अनन्तरं सा ललनाचिन्तयत्। 'ननु द्रक्ष्याम्यद्य कथं मे वत्सो भुङ्क्ते वयस्यैः सह। कीदृशश्चासौ नूतनः सहचर' इति। ततोऽसौ निभृतं मन्दं मन्दं पदानि क्षिपन्ती तत्रागच्छत्। कस्यचित्तरोः पृष्ठतः स्थित्वा यावत्सा तनयमवलोक-यति तावदकस्माद्भीतिग्रस्ताकम्पत। केनापि भीषणेन दृश्येन जातं रोमाञ्चितं घर्माकुलं च तस्याः शरीरं म्लानं च वदनम्।

तस्य कुमारस्य पुरतो फणामुद्धृत्य दोलायते स महान् भुजङ्गः। मुहुर्मुहुरसौ बालकस्तस्य पुरतो हस्तं प्रासारयत् तस्माद्धस्तपुटाच्च दुग्धमपिबत् स उरगः। ततः स कुमारस्तं तृणखण्डेन लीलयाताडयत् 'दूरमपसर' इत्यवदत् स्वयं च किंचिदपिबत्। घटिकार्धपर्यन्तमेव भोजनक्रमोऽवर्तत। तस्मिन् समये भयाभिभूतं तस्या वनिताया हृदयं स्तिमितः श्वासो घनीभूतं च रुधिरमासीत्। युगवद्दीर्घः स कालो निर्जीवितयेव तया कथंचिन्नीतः परमेश्वरस्य प्रार्थनापरया। यदा समाप्तं तद्भोजनं तदा बिलं प्राविशद् लीलया ताडितोऽसौ सर्पः। कुमारः पात्राणि गृहीत्वाऽऽश्रममागच्छन्मात्रा मध्येमार्गं सानन्द-मालिङ्गितः। अश्रुपातैः सा नन्दनमापादशीर्षमस्नापयत्। उरगस्य विषबाधा ननु प्रक्षालितेव तयात्मजस्य शरीरात्।

**प्रश्नाः**—कुत्रावसत् सा नारी? कीदृशः स बालकः? कुत्रागच्छत्स भक्षणार्थम्? कस्तस्य नवीनो वयस्यः?

**अमरकोषे**—सर्पः पृदाकुर्भुजगो भुजङ्गोहिर्भुजङ्गमः । *snake*
आशीविषो विषधरश्चक्री व्यालः सरीसृपः ॥
बिलेशयः कुण्डली स्यात् फणी दर्वीकरस्तथा ।
*उरग:* उरगः पन्नगो भोगी जिह्मगः पवनाशनः ।

**समासाः**—आनन्दः एव वृत्तिः यस्य सः—आनन्दवृत्तिः (बहुव्रीहिः

| | | |
|---|---|---|
| प्राप्तं उदकं यं सः | —प्राप्तोदकः । | ,, |
| चक्रं पाणौ यस्य सः | —चक्रपाणिः । | ,, |
| चन्द्रस्य इव कान्तिः यस्य सः | —चन्द्रकान्तिः । | ,, |
| पुत्रेण सह | —सपुत्रः—सहपुत्रः । | ,, |
| ईश्वरः कर्ता यस्य तत् | —ईश्वरकर्तृकम् । | ,, |
| बह्वयः नद्यः यस्मिन् सः | —बहुनदीकः । | ,, |
| कमले इव अक्षिणी यस्य सः | —कमलाक्षः । | ,, |
| अधिज्यं धनुः यस्य सः | —अधिज्यधन्वा । | ,, |
| शोभनः गंधः यस्य तत् | —सुगन्धि । | ,, |

**अभिप्रायः**—अस्याः कथाया अभिप्रायो दशभिः शब्दैः कथनीयः ।
*telegram* (ननु विद्युत्सन्देश एव प्रहेयः)

---

# द्वाविंशः पाठः ।

## *Destiny's way,* अगम्या विधियोजना ।
*cannot be understood*

**अथ कदाचिच्चत्वारः पुरुषाः भार्याभिः सह नौकाविहारार्थं प्रभाते प्रस्थिताः । नौकाशयं गत्वा तैर्नाविकेन सह कृतः समयः । योजनद्वयस्यान्तरे वर्तते यत् किमपि द्वीपं तत्र गत्वा पुनर्निवर्तितव्यं सन्ध्याकाले । तदर्थं च दातव्या दशरूप्यका इति ।**

ततः स्वेषु स्वेष्वासनेषु यदा ते सर्वे नौकायामुपविष्टास्तदा तेन नाविकेन चालिता साग्निनौका। तस्या अन्तर्भागश्चित्रितो विभूषितश्चासीत्। तत्रासन् कतिपयान्यालेख्यानि पृथिव्या रेखारूपपत्राणि दिशानिर्णयस्य यन्त्राणि गुरूणि वलयानि च। एतानि वस्तूनि सर्वान् कोऽपि युवादर्शयत्तेषां प्रयोजनं



थयत्। अनन्तरमपरो युवा वदति स्म। अहो रमणीयं तद् दृश्यम्। पश्यत भोः, तं बलाकानां समूहम्। श्वेतं वस्त्रं ननु सागरस्य पृष्ठभागे प्रसारितमस्तीति। तत्र यावत्ते सर्वे दृष्टिमकुर्वंस्तावत् सहसैवाकाशे युगपदुदडयन्त ता बलाकाः। तद्वीक्ष्यैकतमा प्रमदोच्चैरवदत्। अहो, उद्भूतं खलु तद्वस्त्रं पवनेन नभसीति। एतादृशैः संलापैरानन्दितं सर्वेषां चित्तम्। अत्रा

न्तरे सार्धयोजनमागता सा तरणी । समीपमेव तैर्दृष्टः कश्चिद्विशालः प्रस्तरः ।

यदा तस्य सविधे प्राप्ता नौका तदा ते तत्रावतीर्णाः सर्वे । तद्रमणीयं स्थलं वीक्ष्योपाहारं कर्तुं तत्रैवोपविष्टाश्च । उपाहारो यावदर्धसमाप्तोऽभवत्तावत् किंचित् किंचिदसर्पत् स प्रस्तरः । किं नु खलु भो एतदिति सर्वैरेव सममुदीरितम् । अचिरा-देवाखिलः स प्रस्तरो न्यमज्जत् सहसैव जले । हा कष्टं, मग्नाः स्म इति तेषां नरनारीणामाक्रोशस्तेन पोतवाहेन श्रुतः । शीघ्रतमं स स्वसेवकैः सह जलेऽवापतत् ता मृतप्राया अबलास्तरण्यां क्रमेणाक्षिपच्च । तेषां यूनामपि पोतमारोढुं साहाय्यमकरोत् । ततस्तेन नाविकेन नगरं प्रति निवर्तिता सा नौः । अनन्तरं लब्धसंज्ञासु तासु युवतिषु कोऽपि युवाब्रवीत् । अहो विचित्रा दैवगतिः । कविना यदुक्तं—'मनसा चिन्तितं कार्यं दैवमन्यत्र चिन्तयेत्' इति तत् प्रत्यक्षीभूतमधुनेति । एकतमा वनितापृच्छत् । कथं स कृष्णप्रस्तरः सहसैव चलितः स्वस्थानादिति । स नाविकः प्रत्यभाषत । नासौ प्रस्तरः परं विशालस्य कस्यापि कूर्मस्य पृष्ठमेव । अहमपि मोहितस्तस्य दर्शनेन प्रथममिति । तदाकर्ण्य सर्वैस्तारस्वरेणोद्घोषितम् । अहो बृहत्तमोऽसौ कच्छपः । अद्भुता खलु सृष्टिरीश्वरस्येति ।

**प्रश्नाः**—कः समयः कृतस्तैः पुरुषैः ? किमर्थं गुरूणि वलयानि स्थापितानि नौकायाम् ? कथं शोभते बकगणः सागरे ?

**अमरकोषे**—समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः । Ocean

उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः ॥

रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ।

**समासाः**—दिने दिने इति —प्रतिदिनम्। (**अव्ययीभावः**)
द्वीपस्य समीपम् —उपद्विपम् ,,
मार्गस्य मध्ये —मध्येमार्गम्। ,,
शक्तिं अनतिक्रम्य —यथाशक्ति। ,,
विष्णोः पश्चात् —अनुविष्णु। ,,
जन्मनः आरभ्य —आजन्म। ,,
( सर्वदा नपुंसके प्रथमैकवचनम् अस्य सामासिकपदस्य। )

**अभिप्रायः**—अस्याः कथाया अभिप्रायः पञ्चभिर्वाक्यैर्वक्तव्यः।

**धातुसाधितानि**—अस्याः कथाया विध्यर्थानि धातुसाधितानि विचिनु।

# त्रयोविंशः पाठः।

## कथाप्रियस्य महीपालस्य। 

Snaking who loved stories

आसीत् कस्मिंश्चिन्नगरे कथाप्रियो नाम कोऽपि राजा। राजकार्ये उदासीनोऽसौ विनोदेन कालमनयत् स्तुतिपाठकैः सह सततम्। प्रत्यहं नूतनः कश्चित्पुरुषः कथयति नृपतयेऽभिनवां कथाम्। कथाश्रवणेन हृष्टः स भूपश्च तस्मै प्रयच्छति बहुमूल्यं पारितोषिकम्। एकस्मिन् दिने रम्या काचित्कथा तेन श्रुता। किंतु सा सत्वरमेव समाप्तेति स विषण्णोऽभवत्। तदा क्रोधवशात्तेनेदमुक्तम्। 'यः कोऽपि सुदीर्घां कथां कथयिष्यति तस्मै प्रदास्यामि राज्यार्धमात्मनः कन्यां च। परं यस्य कथा शीघ्रमेव समाप्तिं यास्यति तस्य शिरश्छेत्स्यामीति।'

ततः प्रथमेन कथयित्रा दिनान्तं कथिता हास्यरसेन पूर्णाऽऽख्यायिका। किंतु यदासौ समाप्ता तदा रोषवशात्स राजा तस्य वधमकारयत्। द्वितीयः पण्डितो दिनद्वयपर्यन्तमवर्णयद्

वीररसेन युक्तां कांचित्कथाम् । परमवसन्नायामेव तस्यां तस्य शिरश्छिन्नमभवत् । तृतीयाद्वक्तुः करुणरसप्रधाना कथा श्रुतामुना राज्ञा । चत्वारि दिनानि व्यतीतानि तस्याः श्रवणेन । किंतु कथायाः कथकप्राणानां च समाप्तिः समकालिकैवासीत् । ततः कश्चिद्धूर्तो युवा कथामेतां कथयितुं प्रारभत । 'आसीत् कोऽपि



महान् धनिकः कस्मिंश्चिन्नगरे । चत्वारः पुत्रा द्वे कन्ये च तस्यासन् । विशालं धान्यागारमासीत्तस्य धनिकस्य । कस्मिंश्चिद् दिने तस्यानाच्छादितं विवरं दृष्ट्वा कश्चन चटक आगतो धान्यकणं गृहीतवान् । अनन्तरं कोऽप्यन्यः खग आगतो धान्यकणं च गृहीतवान् । ततः कश्चिदपरः खग आगतो धान्यकणं च गृहीतवान् ।'

कथाप्रियः—श्रुतमेतदवगतं च । ततस्ततः ।

युवा—देव, अनन्तरं कोऽप्यन्यः खग आगतो धान्यकणं च गृहीतवान्।

कथाप्रियः—ज्ञातमेतद्। अन्यत् किमपि कथय।

युवा—अनन्तरं कश्चिदन्यः खग आगतो धान्यकणं च गृहीतवान्।

कथाप्रियः—भवत्वेतद्। रे मूर्ख, किमन्यत् कथयितव्यमस्ति?

युवा—अनन्तरमन्यः कोऽपि खग आगतो धान्यकणं च गृहीतवान्।

कथाप्रियः—ननु मूढपते, कथय कथाया अपरं भागम्। किमर्थं पुनः पुनः कर्णकटु प्रजल्पसि एकमेव वाक्यम्?

युवा—देव, विशालं तद्धान्यागारम्। तस्मात् सर्वान् धान्यकणान् खगाः कथं नीतवन्तस्तदेकैकशः कथनीयम्। पश्चाद्धनिकस्य कुमाराणां पराक्रमाः कुमारीणां च चातुर्यं वर्णनीयम्। शृणोतु महाराजः। 'अनन्तरं कोऽप्यन्यः खग आगतो धान्यकणं च गृहीतवान्'।

कथाप्रियः—विरम, विरम रे शठ। न श्रोतुमिच्छामि नीरसामिमां कथाम्।

युवा—यच्छतु महाराजस्तर्हि राज्यार्धं स्वकन्यां च मह्यम्। जिता भवतः प्रतिज्ञा मया!

कथाप्रियः—(चिरं विचार्य) ननु सत्यमेतद्। का वा गतिः। गृहाण मे राज्यार्धं कन्यां च। जितोऽस्मि खलु त्वया।

**प्रश्नाः**—कीदृशोऽसौ राजा? का प्रतिज्ञा कृता तेन? किमभवत् त्रयाणां कथकानाम्? कथमजयत्तुरीयो राज्ञः प्रतिज्ञाम्?

**अमरकोषे**:—राज्ञिराटपार्थिवक्ष्माभृन्नृपभूपमहीक्षितः । King
भूपतिर्भूमिपालश्चावनीपतिमहीपतिः ॥

**समासाः**—कथाप्रियः । हास्यरसः । धान्यागारम् । महीपालः । दिनद्वयपर्यन्तम् । (एतेषां पदानां विग्रहं कृत्वा नामानि निवेदय ।)

**शब्दप्रयोगाः**—१. { पुरुषेण कथा कथनीया कथयितव्या या ।
पुरुषः कथां कथयितुमर्हति ।

२. { महीपालेन———नयेन कार्यं कर्तव्यं करणीयं वा ।
महीपालः———नयेन———अर्हति ।

३. { राज्ञा राज्यार्धं दातव्यं देयं वा ।
——— राज्यार्धं - अर्हति ।

४. { - - - धान्यकणा ग्रहीतव्या ग्रहणीया ग्राह्या वा ।
खगः ग्रहीतुम् - ।

## ।श पाठः ।

### क्रौञ्च-प्रश्नाः ।

The stork's question

पुरा किल राज्यभ्रष्टाः पाण्डवाः कदाचिदितस्ततोऽभ्रमन् निवासाय स्थलमन्वेष्टुम् । मध्याह्नकाले तैः कृतः कस्यचित्तरोराश्रयः । भक्षितानि च सन्निधौ पतितानि कानिचित्फलानि । परं न कुत्रापि दृष्टं जलम् । अचिरादेव पिपासया शुष्कमुखीं द्रौपदीं दृष्ट्वा युधिष्ठिरः सहदेवमाह । ‘अयि वत्स, तरुशिखरमारुह्य समीक्षस्व

परितः कोऽपि जलाशयो वर्तते समीपे न वेति।' तदग्रजस्य वचनमाकर्ण्य सहदेवः शीघ्रं वृक्षमारोहत् सूर्यकिरणैः प्रकाशमानं कासारं चानतिदूरेऽपश्यत् । तं तडागं प्राप्य जलं पातुं सहदेवो यावद्धस्तौ प्रासारयत् तावदेव रक्तशिखां मस्तके धारयन् शुभ्रवर्णः कश्चित् क्रौञ्चोऽवदत्। 'विरम रे वत्स, पयःपानाद्विरम । प्रथमं ब्रूहि मे प्रश्नानामुत्तराणि । अनन्तरं पिब सुखेन जलम्' इति। तृषाकुलः सहदेव इदं वचनमनादृत्य पर्याप्तं जलमपिबत्तत्क्षणं च तत्र मृतः सन्नपतत्।

ततश्चिरं सहदेवोऽनागत इति ज्ञात्वा तमेव कासारमागतो नकुलः। तत्र सहदेवं गतासुं वीक्ष्य शोकार्तः स बहु व्यलपत्। क्रौञ्चस्तमपि कथितवान्। 'प्रथमं मा स्पृशोदकम्। मह्यं देहि प्रतिवचनम्' इति। नकुलोऽपि तस्मिन्नवहितो नाभवत् पिपासार्दितो जलप्राशनमारभत सपद्येवाम्रियत च। ततो भीमार्जुनावपि तत्र गतौ। कृतपानौ तावपि च पतितौ गतप्राणौ भूम्याम्। तेन चिन्ताकुलो युधिष्ठिरः प्रस्थितः स्वयं जलमानेतुम्। तडागस्य तीरे चतुरो भ्रातॄन् गतासूनवलोक्य भृशं शोकाकुलोऽसौ तेषां मुखेषु जलसेचनं कर्तुमैच्छत्। ततस्तेन क्रौञ्चेनोक्तं पूर्ववत् तदाकर्ण्य जितेन्द्रियः स धर्मराजस्तं प्रार्थयत। 'उच्यन्ताम् भो भवतः प्रश्नाः। केनापि महात्मना भवता भाव्यम्। न सामान्या खगा एवं भाषन्ते' इति।

क्रौञ्चः—कथं नु पण्डितो भवेन्मनुजः ?

धर्मः—वेदविद्यायाः खल्वभ्यसनेन।

क्रौञ्चः—कोऽसौ धनसंपन्नः सुभूषितोऽपि श्रीमान्न भवेत् ?

धर्मः—यो नाम दीनेभ्यो न ददाति द्रव्यम्।

क्रौञ्चः—किं खलु तत् स्यात्, यद्विश्वस्मादपि गुरुत मेघादपि चोच्चतरम् ?

धर्मः—नूनं मातापित्रोर्वात्सल्यम्।

क्रौञ्चः—कस्य नयने न कदापि निमीलतः?

धर्मः—मत्स्यस्य।

क्रौञ्चः—कोऽसौ सुखप्राप्तेर्मार्गः।

धर्मः—सत्यवचनं भूतदया च।

क्रौञ्चः—किं नाम ब्राह्मणस्य सत्स्वरूपम्?

धर्मः—न केवलं वेदपठनं नापि सन्ध्यावन्दनम्। परं सदाचारः।

क्रौञ्चः—प्रीतोऽस्मि तवोत्तरैः। वरं वृणीष्व जलं च पिब।

धर्मः—जीवन्तु मे चत्वारो भ्रातरस्तव कृपया।

क्रौञ्चः—तथास्तु।

तत्क्षणं संज्ञां लब्ध्वोदतिष्ठन् युधिष्ठिरस्यानुजाः। सर्वे यथेष्टं तन्निर्मलोदकं पीत्वा द्रौपद्यै किंचिदानयन् सुखेन च तत्सरसः समीपे निवासमकुर्वन्।

**वर्णनम्**—उपरिगतस्यालेख्यस्य विस्तरेण वर्णनं क्रियताम्।

**प्रश्नाः**—किमर्थं पाण्डवा वनमगच्छन्? कथं वीक्षितं जलं तैः?
कीदृशोऽसौ क्रौञ्चः? कीदृशः स्वभावो युधिष्ठिरस्य?

**समासः**—शुष्कमुखीम्। रक्तकलापः। क्रौञ्चप्रश्नाः। तृषाकुलः। पयःपानम्। पिपासार्दिता। गतासून्। तृषाशान्तिः। महात्मा। भूतदया। सत्य-वचनम्। धनसंपन्नः। सुवेषः। (एतेषां पदानां विग्रहान् कृत्वा नामानि कथय।)

# पञ्चविंशः पाठः ।

## दमयन्त्याः स्वयंवरः ।

आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ १ ॥

अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ।
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ॥ २ ॥

तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
शूरः सर्वगुणैर्युक्तो वत्सलः संयतेन्द्रियः ॥ ३ ॥

दमयन्ती तस्य कन्या रूपेण तेजसा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप्नोत् सुमध्यमा ॥ ४ ॥

अतीव-रूपसंपन्ना श्रीरिवायतलोचना ।
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ॥ ५ ॥

नलश्च नरशार्दूलो लोकेष्वप्रतिमो भुवि ।
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ ६ ॥

तस्याः समीपे तु नलं प्राशंसंस्ते कुतूहलात् ।
नैषधस्य समीपे च दमयन्तीं पुनः पुनः ॥ ७ ॥

अथैकदा विहाराय नल आसीद्वनं गतः ।
तत्रैकं स्वर्णदेहं स हंसं हस्ते गृहीतवान् ॥ ८ ॥

ततोऽन्तरिक्षगो दीनो नलं वाचमुदैरयत् ।
"हन्तव्योऽस्मि न ते राजन् करिष्यामि तव प्रियम् ॥ ९

दमयन्त्याः सकाशे त्वां कथयिष्यामि नैषध ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित्" ॥ १० ॥

एवमुक्तस्ततो हंसममुञ्चत्स महीपतिः ।
स तु सत्वरमुत्पत्य विदर्भान् गतवान् खगः ॥ ११ ॥

दमयन्ती तदा हंसं दृष्ट्वा हृष्टा मनोहरम् ।
ग्रहीतुं प्रमदाधावत् खगं तं ललितागतिः ॥ १२ ॥

स मानुषीं गिरं कृत्वा भीमकन्यामथाब्रवीत् ।
" दमयन्ति नलो नाम निषधेषु महीपतिः ॥ १३ ॥

कन्दर्प इव रूपेण रामवद्धन्विनां वरः ।
तस्य वा यदि भार्या त्वं भवेथा वरवर्णिनि ॥ १४ ॥

सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ।
रामेण सङ्गता सीता विष्णुना च यथा रमा ॥ १५ ॥

त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।
विशिष्टाया विशिष्टेन सङ्गमो गुणवान् भवेत् " ॥ १६ ॥

एवमुक्ता तु हंसेन दमयन्ती तमब्रवीत् ।
" नृवराय नलाय त्वं कथयस्व तथैव माम् " ॥ १७ ॥

तथेत्युक्त्वाऽण्डजः कन्यां भीमस्य मृदुभाषिणीम् ।
निषधान् पुनरागम्य नले सर्वं न्यवेदयत् ॥ १८ ॥

अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आह्वयत् स महीपालान् भीमो राजा स्वयंवरे ॥ १९ ॥

तदा सर्वे क्षितीशा हि दमयन्तीमभीप्सवः ।
अविशन् मण्डपं दिव्यं महासिंहा गुहामिव ॥ २० ॥

दमयन्ती ततो रङ्गं प्राविशत् सा शुभानना ।
मुष्णती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ २१ ॥

नैषधं वीक्ष्य भैमी तु लज्जमानायतेक्षणा ।
स्कन्धदेशेऽसृजत्तस्य स्रजं परमशोभनाम् ॥ २२ ॥

(महाभारते

**भावार्थः**—अस्य पाठस्य भावार्थं पञ्चभिर्वाक्यैः संक्षेपेण कथय।

**प्रश्नाः**—कैर्गुणैरुपपन्न आसीन्नलः? के गुणा अत्र वर्णिता दमयन्त्याश्च? को दूतः प्रेषितोऽत्र नलेन दमयन्तीं प्रति? को नाम स्वयंवरः? के मिलिताः स्वयंवरार्थम्?

**अमरकोषे**—स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः।
प्रमदा मानिनी कान्ता ललना वामलोचना॥

**परीक्षणम्**—कैः श्लोकैराकृष्यते तव मानसम्? तच्च केन कारणेन? द्वितीये श्लोके केनोपमितो नलः? किमक्षरं तत्रानेकशो वर्तते? किं च तस्य कार्यम्?

पञ्चमे षष्ठे च श्लोके कयोपमिता दमयन्ती नलश्च केनोपमितः? अष्टमे श्लोके द्वितीयायां पङ्क्त्यां किमक्षरं बहुधा दृश्यते? कस्तस्य परिणामः? द्वादशे श्लोके दमयन्त्याः किं विशेषणं भावार्थं सम्यक् पोषयति? एकविंशतितमे श्लोके किं पदं रम्यतमं हेतुगर्भं च वर्तते?

**प्रयोगविशेषाः**—१ दमयन्त्याः सकाशे त्वां कथयिष्यामि।
२ राजन् न हन्तव्योऽस्मि ते।
३ मानुषीं गिरं कृत्वा।
४ विशिष्टाया विशिष्टेन सङ्गमो गुणवान् भवेत्।
५ दमयन्तीमभीप्सवः क्षितीशाः।
[एतेषामर्थो विशदीक्रियताम्।]

# षड्विंशः पाठः।

## बुद्धचरितम्।

**पञ्चविंशतिः शतानि संवत्सराणां व्यतीतानि गौतमकुलोत्पन्नस्य सिद्धार्थस्य जन्मनः। भागीरथ्या उत्तरे तीरे कपिलवस्तु**

नाम किमपि नगरमासीत् । तत्र नयेन राज्यमकरोत् शाक्य-
वंशोत्पन्नः शुद्धोदनो नाम नृपतिः । तस्य सिद्धार्थो नाम पुत्र
रत्नमजायत । स राजसूनुर्बहुसुवृत्तो विवेकशीलश्चासीत् ।
धनुर्वेदं वेदविद्यां दण्डनीतिं चासावध्यैत । परमेतेषु विषयेषु



प्रियतमा तस्याध्यात्मविद्या । यदा यदा स मृगयायै वन-
मगच्छत् तदा तदा 'किमर्थमेते मृगा हन्तव्या' इति भूत-
दययाद्रवत्तस्य हृदयम् । कथंचिद्धनुषि संहितोऽपि बाणः
प्रत्याहृतस्तेन । न च निक्षिप्तः पुनः पशुषु । इत्थं बहुवारं विपिने
नगरे वा विहरन्नसौ दुःखितोऽभवत् परदुःखेन । 'किमर्थं
शरीरिणो दुःखमनुभवन्ति कथं च तस्योपशमो भवेत्'
इत्यासीदनिशं चिन्ताकुलं तस्य मानसम् ।

अष्टादशवर्षीयस्य सिद्धार्थस्य विवाहः पित्रा सम्पादितः। यशोधरा नाम तस्य पत्नी सुशीला सुरूपा चासीत्। नववर्षानन्तरं तयोः पुत्ररत्नमजायत। महानासीत्तस्य जन्मोत्सवः। सन्तुष्टाश्च सर्वे प्रजाजनास्तेन। आनन्दस्य परां कोटिमभजत् तदा नृपकुलम्। किंतु सिद्धार्थः सदान्तर्दृष्टिः समभावेन दिनान्यनयत्। अथैकस्यां निशायां स्वप्नेऽसौ क्रमेणापश्यद् गलिताङ्गं वृद्धजनं रोगग्रस्तं पुरुषं गतप्राणं नरं स्थितप्रज्ञं मुनिं च। तदा दैवी वाणी चैवमन्तः प्रादुरासीत्। 'सखे सिद्धार्थ, एषु दशानां प्रथमत्रिकेषु दुःखमेव भोक्तव्यं मर्त्येन। तस्योपशमस्तु भवेत् तुरीयायां दशायाम्। ततो यदुचितं तत् क्रियताम्' इति। अनेन स्वप्नेन व्यग्रचित्तः सिद्धार्थो दिनमेकं प्रासादे कथंचिन्नीतवान्। अपरस्यां रात्र्यां स गृहान्निरगच्छत् सुप्तेष्वाप्तजनेषु। तपोऽतपच्च दूरस्थेऽरण्ये। दशवर्षपर्यन्तं तेन सेविताः कतिचित् सिद्धाः। अभ्यस्तं चात्मज्ञानम्। ततो विदितवेद्योऽसौ बुद्ध इति प्रथितोऽभवत्। अचिराच्च जनानां पूजास्थानमजायत।

अमुना बुद्धेन तदनन्तरं स्वानुभवो लोकेभ्यो निवेदितः। धर्मतत्त्वानि च निरूपितानि। 'निष्फलं यज्ञकर्म वर्णभेदा निराधाराश्च' इति तेन प्रदर्शितौ सनातनधर्मस्य दोषौ। सत्यनिष्ठा भूतदया सदाचारः संसारत्यागश्चेति निर्दिष्टानि चत्वारि स्वधर्मस्य तत्त्वानि। लौकिक्या पालीभाषया भगवान् बुद्ध एवमुपादिशत्। तस्मात्सामान्यैर्जनैः सोत्साहं स्वीकृतस्तस्य धर्मः। संस्कृतज्ञाः पण्डिताः प्रथमं तमवारुन्धन्। परं पश्चाद्राजाश्रयं लब्ध्वा विविधेषु देशेषु स धर्मो विस्तारमलभत। सोऽयं धर्मप्रवर्तकः शाक्यमुनिर्वयसोऽशीतितमेऽब्दे जडदेहमुत्सृज्य संप्राप्तो 'निर्वाणम्'।

**प्रश्नाः**—कुत्रावसत् सिद्धार्थः ? किमधीतं तेन ? किमथ स गृहान्निर्गतः ? कुत्र कथं च प्राप्तमात्मज्ञानं तेन ? बौद्धधर्मस्य कानि तत्त्वानि प्रसिद्धानि ?

**समासाः**—गौतमकुलोत्पन्नः । भूतदया । चिन्ताकुलः । सुवृत्तः । सोत्साहम् । ( एतेषां विग्रहान् कृत्वा नामानि कथय । )

**वाक्यपूरणम्**— ——— — स्वप्नान् — ———

इत्थं 'धर्मतत्त्वानि,' 'पूजास्थानम्' 'अद्रवत्' इत्यादीनि पदानि वाक्येषु प्रयोजय ।

Pandavas Dice Play

# सप्तविंशः पाठः ।

## पाण्डवानां द्यूतक्रीडा ।

अथ द्रुपदसंबन्धिनः पाण्डवा हस्तिनापुरं यदा न्यवर्तन्त तदा धृतराष्ट्रस्तेभ्यो राज्यार्धमयच्छत् । तत्र संस्थापितं तैरिन्द्रप्रस्थं नाम नगरम् । राजनीत्यां कुशलो युधिष्ठिरः सततं प्रायतत प्रजानां कल्याणाय । अचिरात्समृद्धमभवत् तेषां राज्यं विक्रमश्च प्रसिद्धिमभजत् । तच्छ्रुत्वा मत्सरेण सन्तप्ताः कौरवास्तेषां नाशोपायं चिन्तितवन्तः । द्यूतकर्मणि प्रसक्तं धर्मराजं समाह्वयन्त ते शकुनिप्रेरिताः । तत्र च धनं धान्यं राज्यं भार्यां पाण्डवांश्चा-

जयन्। तदा द्रौपदीमाकर्षन् मदावलिप्ताः कौरवा राजसभायाम्। तस्मिन्प्रसङ्गे तस्या रक्षणं कृतं भगवता वासुदेवेन। ततः



पाण्डवा द्रौपद्या सह वनमसेवन्त। निर्जने वने तैर्नीतानि त्रयोदश वर्षाणि। तत्र समये समये योगेश्वरः श्रीकृष्णस्तानरक्षत्। तेऽपि सच्छीलाः सदा भक्तिपरायणास्तं बहुमन्यन्त। अनेन क्रमेण

अज्ञातवासात्प्रत्यावृत्ताः पाण्डुपुत्राः स्वराज्यं धृतराष्ट्रमयाचन्त । परं सूच्यग्रमात्रामपि भूमिं दातुं नैच्छन् दुर्योधनादयः कौरवाः । ततः कृष्णसहायाः पाण्डवाः कौरवैः सहायुध्यन्त कुरुक्षेत्रे । दारुणतमः स सङ्ग्रामोऽष्टादश दिनान्यभवत् । भीष्मादीनां वीराणां दुर्योधनादीनां च राजपुत्राणां सहस्रश आहुतयस्तस्मिन् रणयज्ञे पतिताः । भगवतः कृष्णस्य बुद्धिचातुर्येण भीमार्जुनयोर्बाहुबलेन च पाण्डवा विजयिनोऽभवन् । सुदीर्घं कालं च हस्तिनापुरे राज्यमशासुः ।

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ १ ॥

**वाक्यानि संयोजय**—१. पाण्डवा द्रोणेन शिक्षिताः । कौरवा द्रोणेन शिक्षिताः । ते दण्डनीत्यां कुशला अभवन् । ते धनुर्विद्यायां कुशला अभवन् ।

२. युधिष्ठिरो द्यूतकर्मणि प्रसक्तः । तं कौरवा द्यूतक्रीडार्थं न्यमन्त्रयन्त । तेभ्यः शकुनिः साहाय्यमयच्छत् ।

३. लाक्षागृहं कौरवै रचितम् । तत्र पाण्डवा दग्धप्राया आसन् । तस्मात् सङ्कटात् विदुरस्तानरक्षत् ।

४. अज्ञातवासात् पाण्डवाः प्रतिन्यवर्तन्त । ते धृतराष्ट्रं राज्यार्धमयाचन्त । दुर्योधनादयस्तेभ्यो न किमपि दातुमैच्छन् ।

**वर्णनम्**—उपरिगतमालेख्यं विस्तरेण वर्णय ।

**उपसर्गकार्यम्**—कृ—पाण्डवाः——— ——— अकुर्वन् ।

अधि+कृ—सन्धिकार्ये कृष्णः——— ——— अधिकृतः ।

अनु +कृ—— ——— ———वृद्धाननुकुर्वन्ति ।

अप +कृ—दुष्टः ———अपकरोति ।

अलं +कृ—राजानः——— ———देहान् अलङ्कुर्वन्ति ।

उप +कृ—सज्जनः अपकाराय उपकारं प्रतियच्छति ।

निरा+कृ—श्रीकृष्णः		सङ्कटानि
प्रति+कृ—		पाण्डवान् राज्यप्राप्तौ

# अष्टाविंशः पाठः ।

## सीतारामयोर्विवाहमङ्गलम् ।

अथ यज्ञसमाप्तेरनन्तरं भगवान् विश्वामित्रः श्रुतवान् जनक-दुहितुः सीताया भाविनः स्वयंवरस्य वृत्तान्तम् । अन्येद्युर्निमन्त्रण-पत्रिकापि प्राप्ता । तदा रामलक्ष्मणाभ्यां समेतः च ऋषिर्जनकस्य राजधानीं मिथिलां प्रति प्रस्थितः । दूरतो विविधैर्भूषणैरलङ्कृतां मिथिलानगरीं वीक्ष्य भृशमानन्दितौ तौ राजपुत्रौ । प्राकारस्य समीपे यदुद्यानमासीत्तत्र विश्रान्तिमनुभवितुं जलाशयतीरे तरुच्छायाया-मुपविष्टास्ते त्रयः पथिकाः । तेषामगमनं किङ्करैर्निवेदितं जनकाय । अविलम्बितमेव तं शिष्यानुगतं महर्षिं प्रत्युदगच्छत्स वैदेहः । महतो-त्सवेन च राजरथे समारोप्य प्रासादमनयत् ।

अन्यस्मिन्नहनि सुविशाले मणिमालाविभूषिते मण्डपे मिलिता बहवो नृपा राजपुत्राश्च । ततो जनकः शिवचापमानेतुं सेवका-नाज्ञापयत् । किङ्करैरानीतं तदैश्वरं गुरुतमं कार्मुकं हस्तेन निर्दिश्य स उद्घोषयत् । 'एनं शैवं चापं यः कोऽपि नरवीर उत्थाप्य सज्यं करिष्यति तं मम कन्यारत्नं सीताभिधानं वरि-ष्यति' इति । तदाकर्ण्य क्रमेण प्रयत्नाः कृता बहुभिर्भूपालैर्धनुषः सज्यीकरणे । परं ते सर्वे विफला जाताः । रावणोऽपि प्रायतत तद्धनुराक्रष्टुम् । गर्वाभिभूतः स यावत्स्वपराक्रमं वर्णयति तावत् कार्मुकस्य गुरुत्वेन चालितोऽसौ राक्षसाधिपो भूमौ न्यपतत् । तच्छरासनं सज्यीकर्तुं न कोऽपि क्षत्रियः समर्थ इति समीक्ष्य

जनकोऽपृच्छत् 'अपि निर्वीरं जातमुर्वीतलम्' इति। अवमानास्पद-मेतद्वचनं श्रुत्वा रामचन्द्रो मुनिसङ्घादुत्थायाब्रवीत्। 'आः कथमेतत् सम्भवति जीवत्सु राघवेषु।' इत्युक्त्वा क्षात्रतेजसा



मलिनयन्नृपगणं लीलयैव शाङ्करं तद्धनुरुदहरत् स लक्ष्मणाग्रजः। दक्षिणपाणिना यावत्स धनुर्ज्यामाकर्णमाकर्षति तावत्सहसैव

भग्नं तत्कार्मुकं मध्यभागे। तदा महान् शब्दोऽजायत। तेन च भीतिग्रस्तास्तत्रस्था जना अभवन्। ततः पुरुषोत्तमं घननीलं तं रामचन्द्रं सानन्दमवृणुत लावण्यवती मैथिली। तयोर्विवाहोत्सवं दृष्ट्वा प्रमुदिता महर्षय आशीर्भिस्तावन्वगृह्णन् स्वर्गवासिनश्च देवाः पुष्पवृष्टिमकुर्वन्।

परिणयविधौ भङ्क्त्वानङ्गद्विषो धनुरग्रतो
जनकसुतया दत्तां कण्ठे स्रजं हृदि धारयन्।
कुसुमधनुषा पाशेनेव प्रसह्य वशीकृतो-
ऽवनतवदनो रामः पायात्त्रपाविनयान्वितः॥ १॥

**प्रयोगान्तराणि—**

१. तेषामागमनं किङ्करैर्निवेदितं जनकाय। (कर्तृस्थाने 'जनकः')
२. अपि शैवं धनुः सज्यीकर्तुं न कोऽपि समर्थः? (कर्मणि)
३. राममन्तरेण शैवं धनुः सज्यीकर्तुं न कोऽपि समर्थः। (कर्तृस्थाने 'रामः')
४. रामचन्द्रं मैथिली तदा सानन्दमवृणुत। (कर्मणि)

**अमरकोषे**—१. यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः।
२. पुरन्ध्री सुचरित्रा च सती साध्वी पतिव्रता।
३. धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः।

**समासाः**—अवनतमुखः। कन्यारत्नम्। शरासनम्। निर्वीरम्। आकर्णम्। अनङ्गद्विट्। कुसुमधनुषा।

**धातुसाधितानि**—१. अस्मिन् पाठे वर्तमानकालिकानि यानि कृदन्तानि सन्ति तानि दर्शय। यत्-वर्ण्-आकर्ष्-इत्यादीनां च तादृशानि साधय।
२. प्रयोजकरूपाणि दर्शय। प्राप्-स्पर्श्-इत्यादीनां च तादृशानि साधय।

३. 'सज्जीकृतम्' – 'वशीकृतः' –तथा च 'सज्जी – भूततम्' – 'वशीभूतः' इत्यादीनि अन्येषु वाक्येषु प्रयोजय ।

**वर्णनम्**—उपरिगतस्य चित्रस्य विस्तरेण वर्णनं कुरु ।

---

# नवविंशः पाठः ।

## रामचन्द्रस्य वनवासः ।



अथ वृद्धत्वमापन्नो दशरथश्चतुर्णामपि पुत्राणामनुरूपाभिर्भार्याभिर्विवाहं समपादयत् । एवं गृहस्थाश्रमे महत्तमं कर्तव्यं संपाद्य आत्मानं धन्यं मन्यमानः स क्षितिपोऽचिन्तयत् । 'नूनं कृतकृत्योऽहमधुना । दिष्ट्या, एतादृशैः सर्वगुणसम्पन्नैस्तनुजैः सेवितोऽहं भजे संसारसुखस्य परां कोटिम् । सम्प्रति हि राज्यधुरां प्रियतमे रामचन्द्रे निक्षिप्य लब्धुमिच्छामि विश्रान्तिम् ।' इति मनसि कृत्वा कुलगुरोर्वसिष्ठस्यानुज्ञयाधिकारिण आज्ञापिताः सर्वेऽभिषेकसाहित्यं सम्पादयितुं नगरीं चालङ्कर्तुम् ।

एनं वृत्तान्तं श्रुत्वा मन्थरया प्रेरिता कैकेयी दशरथमवदत् 'यदि सत्यमेव मयि भवतोऽनुरागस्तर्हि भरतो भवतु युवराजो रामश्च वने वसतु चतुर्दश वर्षाणि । पुरा सङ्ग्रामे भवता प्रतिज्ञातं वरद्वयमहमेवं याचे ।' इत्थं हृदयभेदि तस्या वचनमाकर्ण्य मूर्च्छितोऽभवद्दशरथो वात्सल्यातिशयेन ।

विचित्रेयं दैवगतिः । यतः सुनिश्चितमभिषेकदिनं सुदुःखदं वनवासदिनमभवत् । अभिषेकमण्डपं नागच्छद्रामचन्द्रः किंतु दण्डकारण्यम् । सिंहासने नोपाविशद्रामभद्रः किंतु नौकायाम् । मङ्गलवाद्यानि नानदंस्तदा किंतु रुदितानि पौराणाम् । पुरजना

न सममानयन् राममाचारलाजैः किंतु वनस्पतयः पुष्पैः। अहो, अज्ञेयता भवितव्यस्य। रामेण सह सीता लक्ष्मणोऽपि च वनं प्रस्थितौ। शोकविकला अभवन् सर्वे पौराः। हा कष्टम्। रामरूपेण पौराणां प्राणा एव ननु गता दण्डकारण्यम्। विवेकशीलो भगवान् वसिष्ठस्तदासान्त्वयत्सर्वान् विविधाभिः कथाभिः।

नौकया भागीरथीमुत्तीर्य सीतया लक्ष्मणेन चानुगतो रामो वनं प्राविशत्। स्थाने स्थाने ऋषिभिः पूजितोऽसौ तेषां भयनिवारणमकरोत्। मुनिभार्याभिः संमानिता सीता लीलयासहत वनवासस्य दुःखं पत्युः समागमेन। लक्ष्मणः सदा फलाहारं कुर्वन् तत्परोऽभवत् सीतारामयोः सेवायाम्। अत्रान्तरे मातुलगृहादयोध्यामानीतो भरतः कैकेय्यै भृशमक्रुध्यद्रामचन्द्रस्य दर्शनाय चित्रकूटमगच्छद् रामं प्रत्यवदच्च। 'भवतां पादुके स्थापयामि सिंहासने प्रतिनिधित्वेन च वहामि राज्यधुराम्। एष मे निश्चयः। अतः परं कुलगुरवो भगवन्तः प्रमाणम्' इति। ततो वसिष्ठेनोक्तम्। 'साधु, रे वत्स, साधु। बन्धुप्रीत्या धर्मनिष्ठायाश्च पराकाष्ठैवासौ दृष्टास्माभिरद्य। युवयोरेष स्वार्थत्यागो जगति जनानां बोधरूपो भविष्यतीति मे भाति' इति। अनन्तरं चिरेण पञ्चवटीं प्राप्ता रामसीतालक्ष्मणाः। तत्प्रदेशस्य सौन्दर्येणाकृष्टास्तत्रैवाश्रमं कृत्वा ते न्यवसन्।

जातः सूर्यकुले पिता दशरथः क्षोणीभुजामग्रणीः
सीता सत्यपरायणा प्रणयिनी यस्यानुजो लक्ष्मणः।
दोर्दण्डेन समो न चास्ति भुवने प्रत्यक्षविष्णुः स्वयं
रामो येन विडम्बितोऽस्ति विधिनान्यस्मिञ्जने का कथा॥ १॥

**वाक्यानि संयोजय**—१. एवं गृहस्थाश्रमस्यान्तिमं कर्तव्यं दशरथोऽकरोत्। आत्मानं धन्यममन्यत। रामचन्द्रे राज्यभारं स समर्पितवान्।

२. कैकेय्या वचनं हृदयभेदि भवति । तद् दशरथः शृणोति । तदा स निःसंज्ञो भूमौ पतति । वात्सल्यातिशय एव तस्य पतनस्य कारणम् ।

३. रामचन्द्रं सीता लक्ष्मणश्चान्वगच्छताम् । स भागीरथीमुदतरत् । नौका नद्या उत्तरणस्य साधनम् । तदा स वनं प्राविशत् ।

**अमरकोषे**—गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा । Ganges.
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ।
मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ॥

**वाक्यपूरणम्**—१. दशरथो——— ———यौवराज्ये——— ———(स्था)।
२. मन्थरा——— ———रामाभिषेकस्य वार्ता——— ———(नि + विद्)
३. कैकेयी——— ———दण्डकारण्यं——— ———(प्रेष्) ।
४. तं प्रदेशं——— ———गोदावरी——— ——— (द्रु) ।
५. वसिष्ठो——— ———अयोध्याराज्ये——— ——— (नि + युज्) ।

**वर्णनम्**—रामस्याभिषेकदिने यत् किमपि दैवेन घटितं तद्वर्णय ।

# त्रिंशः पाठः ।

## पम्पा सरसी ।

**सौमित्रे शोभते पम्पा विशाला विमलोदका ।**
**फुल्लपद्मा हास्ययुक्ता शोभिता विविधैर्द्रुमैः ॥ १**
**पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम् ।**
**सृजतां पुष्पवर्षाणि वर्षे तोयमुचामिव ॥ २ ॥**

पतितैः पतमानैश्च पादपस्थैश्च मारुतः ।
कुसुमैः क्रीडतीवासौ बालकः कन्दुकैर्यथा ॥ ३ ॥
विक्षिपन्विविधाः शाखा नगानां कुसुमोत्कटाः ।
मारुतश्चलितस्थानैः षट्पदैरनुगीयते ॥ ४ ॥
अमी मयूराः शोभन्ते प्रनृत्यन्तस्ततस्ततः ।
भृङ्गमारुतगानस्य तालं धृत्वा मनोहरम् ॥ ५ ॥
पश्य लक्ष्मण सन्नादं वने मोदविवर्धनम् ।
पुष्पिताग्रेषु वृक्षेषु द्विजानामवकूजितम् ॥ ६ ॥
जले तरुणसूर्याभैर्भ्रमराहतकेसरैः ।
पङ्कजैः शोभते पम्पा समन्तादभिसंवृता ॥ ७ ॥
पवनाहतवेगाभिरूर्मिभिर्विमलेऽम्भसि ।
पङ्कजानि विराजन्ते ताड्यमानानि लक्ष्मण ॥ ८ ॥

श्रोत्रं हंसस्वनोऽयं सुखयति मधुरो नूपुराह्लादकारी
दृष्टिप्रीतिं विधत्ते तटतरुविवरालक्षिता सौधमाला ।
गन्धेनाम्भोरुहाणां परिमलपटुना जायते घ्राणसौख्यं
गात्राणां शान्तिमेते विदधति मरुतो वारिसम्पर्कशीताः ॥ ९ ॥

नीपस्कन्धे निवसति लसद्बर्हभारो मयूरो
दीर्घापाङ्गश्चरति च तृणं शाद्वलोऽयं कुरङ्गः ।
कुम्भेनोच्चैः स्पृशति विटपे सल्लकीं कुञ्जरोऽसौ
कस्मै नायं रुचिरसरसो रोचते तीरभागः ॥ १० ॥

(रामायणे)

**परीक्षणम्**—कं भावमुत्पादयतीदं काव्यं पाठकस्य मनसि? के श्लोका रम्यतमाः सन्ति? तदपि केन कारणेन?

केनोपमितं वनं-वृक्षाः-पुष्पाणि स्थाने स्थाने? भृङ्गमारुतयोश्चेष्टितानि च कथं वर्णितानि?

कतीनामिन्द्रियाणां शान्तिं विदधाति सृष्टिः? तदपि कथम्?

तृतीये श्लोके केनोपमितो मारुतः कुसुमानि च? प्रथमायां पङ्क्त्यां किमक्षरं बहुकृत्वो दृश्यते? किं तस्य कार्यम्?

पञ्चमे सप्तमे च श्लोके यो यो भावार्थो ज्ञायते तं तं विस्तरेण ब्रूहि। चरमे श्लोके कस्य वर्णनं कृतम्? तत्र स्वभावोक्तिः कथं दृश्यते तद् विशदीकुरु। तत्र विशेषणपदानामौचित्यं दर्शय।

**समासाः** — विमलोदका — कुसुमोत्कटः — तरुणमर्याभिः — रुचिरसरः — पवनाहतवेगाः।

# एकत्रिंशः पाठः।

## सीताहरणम्। carrying away Sita

अथ कदाचित् पञ्चवट्यामपराह्णकाले रामः सीतया सहोद्याने विनोदं कुर्वन्नासीत्। लक्ष्मणस्तृटजं परितः प्राप्तावसरश्चरति स्म। अकाण्डे दृष्टः कश्चिद्धरिणः सीतया। सुवर्णमयं तस्याङ्गं रुचिरा चाकृतिरासीत्। तं दृष्ट्वा वैदेही प्रार्थयत भर्तारम्। अयि आर्यपुत्र, पश्य पश्यैनमद्भुतं मृगम्। कनकमयं दृश्यतेऽस्य शरीरम्। गृहाणैनं सजीवमार्यपुत्रो मदर्थमिति। तदा कौसल्येयोऽवदत्। 'नूनमपूर्वोऽयं कुरङ्गो जानकि। अहमपि मोहितोऽस्य दर्शनेन। पर्णशालां त्वं गच्छ यावदहमेनं धृत्वानेष्यामि।' इत्युक्त्वा मृगमन्वधावत् स वीरः।

असम्भवं हेममृगस्य जन्म
तथापि रामो लुलुभे मृगाय।
प्रायः समापन्नविपत्तिकाले
धियोऽपि पुंसां मलिनीभवन्ति॥ १॥

इति विपश्चिद्भिर्यदुक्तं तत्सत्यमेव। अस्तु।

महता जवेन धावन्स हरिणः सुदूरमनयद् रामम् । सजीवोऽयं न हस्तगतो भविष्यतीति मत्वा राघवेण तस्मिन्निपातितो निशितो बाणः । तेन मर्मणि विद्धोऽसौ कुरङ्गो म्रियमाणो मानुषीं वाचमाश्रित्याक्रोशत् । 'हा लक्ष्मण, हे सीते, म्रिये । त्रायस्व मामिति' ।

तदाकर्ण्याश्रमस्था सीता भृशं चिन्ताकुलाभवल्लक्ष्मणं च प्राहिणोद् रामसाहाय्यार्थम् । उटजसीमां मोल्लङ्घयेति तां विज्ञाप्य सोऽग्रजस्य मार्गमन्वधावत् । दूरमपगते लक्ष्मणे भिक्षुवेषेण प्राप्तो रावणः पर्णशालाया द्वारम् । 'भगवति भिक्षां देहि' इति तस्य याचनां श्रुत्वा जानकी बहिरागच्छत् । तां कपटरूपो लङ्केशोऽब्रवीत् । हे वैदेहि मया सहागच्छ लङ्कानगरीम् । तस्या अहं भूपतिर्भाग्यशाली रावणः । किमर्थमिदं वनं सेवसे तेन तापसेन सह । मया सह राज्यसुखमनुभव । इत्युक्त्वा स क्रूरकर्मा रावणो बलात्तामाकृष्य प्रापद्यत वायुवेगेन लङ्काम् ।

आश्रमं प्रत्यागतो रामः सीतामपश्यन् प्रमुक्तकण्ठमरोदीत् । इतस्ततो भ्रमतस्तस्य जातं वानरैः सह सख्यम् । महानुभावेन हनूमता दृष्टं सीताया निरोधनस्थलम् । कपीनां सैन्यं रामो लङ्कामनयद्रावणं च सङ्ग्रामेऽहन् । ततः पुष्पकमारुह्य रामः सीतया परिवारेण च सह न्यवर्ततायोध्यामानन्दयच्च पौरान् ।

रामः सीतां हुतभुजि परीक्ष्यैव लक्ष्मीस्वरूपा-
मादायैनां हरिवरगणैः संवृतः पुष्पकेण ।
गत्वायोध्यां पवनतनयाराधितः सानुजश्च
साम्राज्यस्थः सह दयितया तत्र रेमेऽभिरामः ॥ १ ॥

**समासाः**— सुग्रीवसम्भाषणम् । समापन्नविपत्तिकले । महर्षम् । लङ्काधिपतिः । चिन्ताकुलहृदया । विसंज्ञा ।

**अमरकोषे**—असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः । Rakshas
शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥

**प्रयोगान्तराणि**—१. हेममृगस्य जन्मासम्भवमिति न ज्ञातं रामेण ।
(नञौ दूरीकृत्य भावार्थो वक्तव्यः ।)

२. तेन मर्मणि विद्धोऽसौ कुरङ्गो म्रियमाणो मानुषीं वाचमाश्रित्याक्रोशत
(कृदन्तस्थानेषु क्रियापदानि प्रयोजय ।)

३. महता जवेन धावन्स मृगो रामं सुदूरमनयत् । (कर्मणि)

४. दूरमपगते लक्ष्मणे भिक्षुवेषेण रावणः पर्णशालाद्वारं प्राप्तः । ('यदा-तदा' इति पदद्वयेन भावार्थो वक्तव्यः ।)

५. रामः काञ्चनमृगाय लुभ्यति स्पृहयति वा । (कर्तृस्थाने 'मृगः' प्रयोक्तव्यः ।

६. किमपि सङ्कटमापतितं राघवस्य राघवं वा । (कर्तृस्थाने 'राघवः' प्रयोक्तव्यः ।)

७. लक्ष्मणेन निर्दिष्टा मर्यादा सीतयोल्लङ्घिता । (उचितैर्विशेषणपदैः क्रिया-विशेषणैश्च वाक्यं विस्तारय ।)

**वेषवर्णनम्**—यदा रावणेन भिक्षुवेषो धृतस्तदा यानि राजचिह्नानि तेन त्यक्तानि यानि च भिक्षुचिह्नानि स्वीकृतानि तेषां वर्णनं विस्तरेण लिख्यताम् ।

**तुल्यरूपाः शब्दाः**—प्रसादः-प्रासादः । सन्देहः—सन्दोहः ।

मनोभावः—मनोभवः । निशाचरः—निशाकरः ।

प्रेषिता—प्रोषिता । आकर्णम्—आकर्ण्य ।

अपगतः—उपगतः । काञ्चनम्—काञ्चन ।

[एतान् शब्दान् वाक्येषु प्रयोजय]

**त्रिषु लिङ्गेषु समानार्थाः शब्दाः**—१. दाराः (पु.)-भार्या (स्त्री.)-कलत्रम् (न.) २. कायः (पु)—तनुः (स्त्री.)—शरीरम् (न.) ३. मार्गः (पु.)—रथ्या (स्त्री.)—वर्त्मन् (न.) ४. तटः (पु.)-तटी (स्त्री.)—तटम् (न.)

# द्वात्रिंशः पाठः ।

## वर्षा–वर्णनम् ।

स तदा वालिनं हत्वा सुग्रीवमभिषिच्य च ।
वसन् माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥ १ ॥

अयं स कालः सम्प्राप्तः समयोऽद्य जलागमः ।
सम्पश्य त्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥ २ ॥

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ ३ ॥

एष फुल्लार्जुनः शैलः केतकैरभिवासितः ।
सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥ ४ ॥

कशाभिरिव हैमीभिर्विद्युद्भिरभिताडितम् ।
अन्तःस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ ५ ॥

रजः प्रशान्तं सहिमोऽद्य वायु-
र्निदाघदोषा हि तथा प्रशान्ताः ।
स्थिता च यात्रा वसुधाधिपानां
प्रवासिनो यान्ति नराः स्वदेशान् ॥ ६ ॥

क्वचित् प्रकाशं क्वचिदप्रकाशं नभो विकीर्णाम्बुधरं विभाति ।
क्वचित् क्वचित् पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ ७ ॥

समुद्वहन्तः सलिलस्य भारं बलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ ८ ॥

तडित्पताकाभिरलङ्कृतानामुदीर्णगम्भीरमहारवाणाम् ।
विभान्ति रूपाणि बलाहकानां रणोत्सुकानामिव वानराणाम् ॥ ९ ॥

मुक्तासमं स्वच्छजलं पतद्वै सुनिर्मलं पर्णपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहङ्गाः सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ १० ।

महान्ति कूटानि महीधराणां धौतानि धाराभिरलङ्कृतानि ।
विभान्ति नूनं विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः ॥ ११ ॥

वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति सुनिःश्वसन्ति ।
नद्यो धना मत्तगजा वनान्ताः फुल्लप्रसूनाः शिखिनः प्लवङ्गाः ॥ १२ ॥

(रामायणे)

**अमरकोषे**—अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ।
धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत् ॥

**प्रश्नाः**—कः करोत्येतद्वर्षावर्णनम् ? के श्लोका रामचन्द्रस्य तात्कालिकीं मनोवृत्तिं सूचयन्ति ? वर्षासु किं दृश्यते नभसि ? के उल्लसिता भवन्ति तदा ? के निदाघस्य दोषाः कथं च प्रशाम्यन्ति ते ?

**परीक्षणम्**—को रसः प्रधानोऽस्मिन् काव्ये ? कैः श्लोकैराकृष्यते तत्र चित्तम् ? तदपि कस्मात्कारणात् ? स्थाने स्थाने केनोपमितं नभः-मेघाः-विद्युत्-शैलाः-प्रपाताः ?

तृतीयश्लोकस्याभिप्रायो विशदीक्रियताम् ।

पञ्चमे श्लोके पूर्णोपमा दृश्यते । तत्र विविधानां पदानां रहस्यं स्पष्टीक्रियताम् ।

सप्तमेऽष्टमे च श्लोके कानि पदानि तदन्तर्गतं भावार्थं सूचयन्ति ? एतयोः श्लोकयोस्तदनुरूपं पठनं कार्यम् । स्वभावोक्तेरुदाहरणानि प्रदर्शय ।

नवमे श्लोके को रसो वर्णितः कविना ? कानि पदानि तं सूचयन्ति ? कान्यक्षराणि च तं रसं पोषयन्ति ?

**आलेखनम्**—इदं सर्वं वर्षावर्णनं यत्र सूचितं भवेत्तदनुरूपं चित्रमालिख । स्थाने स्थाने तं तं वर्णं प्रयोजय ।

साधितानि विशेषणानि—हैमी—हेम्ना निर्मिता

शैलः—शिलाभिः रचितः ।

[ इत्थमेतेषां शब्दानां विशेषणानि साधय । ]

| | |
|---|---|
| इन्द्रस्य इदम्— । | शिवस्य एषः— |
| विष्णोः इयम्— । | पर्वतस्य इदम्— |

# त्रयस्त्रिंशः पाठः ।

## जातिधर्मः सुदुस्त्यजः ।



अथ कस्मिंश्चिदरण्ये व्याधैः स्थापिते पञ्जरे पतितः कोऽपि व्याघ्रः । पञ्जरान्निर्गन्तुं महान्प्रयत्नः कृतस्तेन । तथापि गुरुत्वात्स पञ्जरः स्थानान्नाचलत् । तस्य द्वारमप्युद्घाटयितुमक्षमः सोऽभवत् । ततः कोऽपि ब्राह्मणो निकटवर्तिना वर्त्मनागच्छंस्तेन दृष्ट उक्तश्च ।

व्या०—भो दयालो ब्राह्मण, सर्वथा परोपकारी भवान् । भूतदया च भवतो धर्मः । पश्य, एषोऽहमस्मिन् कारागारे पातितो नृशंसैर्व्याधैः । मोचय मामस्मात्पञ्जरात् । महत्पुण्यं खलु प्राप्स्यति भवाननेन कर्मणा ।

ब्रा०—प्रकृत्या हिंस्रो व्याघ्र इति जना वदन्ति । क्रूरस्य कारागृहवास एव योग्यो न तु स्वातन्त्र्यमरण्ये । यद्यहं त्वां मोचयामि तर्हि त्वं सपद्येव व्यापादयिष्यसि गवादीन् । अपि च मुक्तमात्रो मामेव व्यापादयिष्यसि प्रायस्त्वं घातशीलः । कथं मारात्मके त्वयि विश्वासः कर्तव्यो दया वा दर्शयितव्या ।

व्या०—अयि पुण्यदर्शन ब्रह्मन्, कथं नाहं विश्वासपदम् ? पश्चात्तापेन दग्धं मे पूर्वदुश्चरितम् । यत् किमप्यवशिष्टं तदपि

नष्टं भवतो दर्शनेन । अस्माद्व्यसनान्मुक्तोऽहं भवतः शिष्यत्व-
माचरिष्यामि तपस्तप्त्वा भगवत्प्राप्तिं च साधयिष्यामि ।



ब्रा०—सत्यं पश्चात्तापेन दग्धं तव पापाचरणं दृश्यते ।
अन्यथा कुत एतादृशस्य धर्मज्ञानस्य सम्भवः । अतस्त्वां मोच-
याम्यहम् । धर्मं चर । प्रतिज्ञाभङ्गं मा कुरु ।

ततो ब्राह्मणेनोद्घाटितं पञ्जरस्य द्वारम् । तत्क्षणमेवोत्प्लुत्य
बहिरागतो व्याघ्रः । चिरमुपोषितः स पशुर्भक्षणार्थमितस्ततो-
ऽवालोकयत् । स ब्राह्मण एव तस्य भक्ष्य आसीत्तदा नान्यत्
किंचित् । अतः सहसैव तेन गृहीतः स ब्राह्मणः करालनखैर्हस्तैः ।
तेन च भीतभीतः सोऽवदत् ।

ब्रा०—रे नृशंस कृतघ्न पशो, मामेवोपकारिणं व्यापादयसि? कुत्र गतं तव धर्मज्ञानं प्रतिज्ञा च।

व्या०—का कथा रे मूढाधुना धर्मस्य। चिरकालमनशनात् क्षुधितोऽहम्। जातिधर्ममेव जानाम्यस्मिन्क्षणे न किमप्यन्यत्।

ब्रा०—हा कष्टम्। व्यर्थं घातशीलेऽस्मिन् पशौ विश्वासः कृतो मया। कृतघ्नतमोऽयं व्याघ्रः। किं करोमि।

व्या०—रे मूर्ख, व्यसनगतः प्राणी कामपि प्रतिज्ञां कुर्याद् वचनं वा ब्रूयात्। न तस्यानुष्ठानमवश्यं भवति सङ्कटान्निर्गतेन तेन।

ब्रा०—मया रक्षितस्त्वं मामेव भक्षयसि? नैतदुचितम्। मैवं कृतघ्नो भव। अन्यायं च मा कुरु।

व्या०—नैषोऽन्यायो ब्राह्मण। सर्वत्रैतादृशी परिपाटिरस्मिन् जगति दृश्यते।

ब्रा०—न मे तत्र विश्वासः।

व्या०—भवतु। अत्र कमपि साक्षिणं पृच्छ। तस्य च निर्णय-मङ्गीकर्तुं तत्परोऽहम्।

ब्रा०—(परिक्रम्य) को नु एष आगच्छति। हन्त भोः, जम्बूकोऽसौ। तमेव तावत् पृच्छामि।

ज०—को नाम वृत्तान्तः पुण्यशील ब्राह्मण। अपि कुशलं भवतः।

ब्रा०—न कुशलम्। मया पञ्जरान्निर्मोचितोऽयं व्याघ्रो मामेव ग्रसितुमुद्युक्तः। अपि न्याय्यमेतत्?

ज०—(विचार्य) अतीव मन्दोऽहम्। नावगच्छामि तव भाषणम्। तत्स्थानमेव गच्छावो येन स्पष्टमेव पश्यामि सर्वम्।

ब्रा०—भवतु। आगच्छ। एषोऽत्र पञ्जरः। अयं व्याघ्रः प्रथम-मासीत् पञ्जरे। अनेन मार्गेणाहमागच्छं तं चामोचयम्।

ज०—( साकूतम् ) बाढम् । ज्ञातमेतन्मया । त्वं पञ्जरेऽभवः । व्याघ्र आगच्छत्त्वां चामोचयत् ।

व्या०—( सकोपम् ) नैवं रे मूढ । अहमासं पञ्जरे ।

ज०—( सव्याजम् ) ननु सत्यं तत् । अहमासं पञ्जरे—नहि नहि, अयुक्तमेतद् । क आसीत् तत्र? सर्वोऽयं सङ्करो जातो मम मनसि । अस्तु नाम, पश्यामि पुनश्च । व्याघ्र आसीद्ब्राह्मणे पञ्जरश्चागच्छन्मार्गेण—नैवं नैवं भवेत्कदापि । मन्दोऽहं खलु नावगच्छामि तामवस्थाम् । न कदापि ज्ञास्यामि न युगान्तरेऽपि वा ।



व्या०—( सनिश्चयम् ) रे जम्बूकहतक, त्वया ज्ञातव्यमेव कथयाम्यधुना तत्सर्वम् । एषोऽहं व्याघ्रः । अयमसौ पञ्जरः सोऽयं ब्राह्मणः । अहमासं पञ्जरेऽस्मिन् ।

ज०—( सस्पृहम् ) कथं महाराज, कथमविशस्त्वं तत्र ?

व्या०—एवं रे जडमते ! यथापूर्वमेषोऽहं पञ्जरे स्थितः। ( पञ्जरं प्रविशति । )

ज०—भवतु । ( निमिषार्धादेव जम्बूकः पञ्जरस्य द्वारमधः पातयति ) त्वमत्रैव मृत्युमपेक्षस्व रे शठ । कृतघ्नस्यायमेव दण्ड उचितः। गच्छ भो ब्राह्मण, स्ववर्त्मना । मा विश्वासं कुरु मारात्मकस्य वचसि ।

एवं बुद्धिचातुर्येण शृगालो ब्राह्मणं रक्षितवान् । शठं प्रति शाठ्यमेव कार्यं न तु सत्यम् ।

**वाक्य-प्रयोगः**—१. व्याघ्रं ग्रहीतुकामो व्याधः पञ्जरमस्थापयत ।
(कर्तरि भूतकालवाचकं प्रयोजय पुनश्च कर्मणि।)

२. स्वमोक्षोपायं चिन्तयन् स शार्दूलः पान्थमपश्यत । ( यथापूर्वम् )

३. घातशीलः पशुः कथं मोचयितव्य इति शङ्कमानो ब्राह्मणो व्याघ्रमवदत् । ( यथापूर्वम् )

**उपसर्गकार्यम्**—१. श्वस-आश्वस-विश्वस-निश्वस ।

२. स्था-प्रस्था-अनुस्था-उपस्था-उत्था-संस्था ।

३. गम्-आगच्छ्-उपगच्छ-अधिगच्छ्-अवगच्छ-संगच्छ ।

४. विश्-उपविश्-संविश्-निर्विश् । ( वाक्येषु प्रयोजय । )

**विशदीकरणम्**—१. पञ्जरान्मुक्तोऽहं तपस्तप्त्वा भगवत्प्राप्ति साधयिष्यामि । ( त्रिभिर्वाक्यैः )

२. चिरकालेनानशनात्क्षुधितोऽहं त्वामुपकारिणमपि भक्षयिष्यामि। (चतुर्भिर्वाक्यैः )

३. व्याधस्थापितात् पञ्जरान्मोचितो व्याघ्रो ममोपकारं विस्मृत्य मामेव कृतघ्नो भक्षितुकामः । ( पञ्चभिर्वाक्यैः )

**नाट्यम्**—एषा कथा कुमारैर्नाटयितव्या । शृगालेन प्रयोजिता युक्तिश्चावगन्तव्या ।

# चतुस्त्रिंशः पाठः ।

## कालीयमर्दनम् ।

पुरा किल गोकुले वृन्दावने च भगवता कृष्णेन शैशवे यत् किमपि विहृतं तदवर्णनीयं खलु । सर्वमेव गोकुलमनुरक्तमासीत् तस्मिन्नन्दात्मजे । अपूर्वः कोऽप्ययं पुत्र इति तस्मिन्नस्निह्यद् वात्सल्यातिशयेन यशोदा । असामान्योऽयं खेलनपटुर्वयस्य इति तमन्वगच्छन् सर्वे समवयस्का गोपकुमारा महता मित्रभावेन ।

अथ कदाचित् वृन्दावने बहुभिर्गोभिर्वत्सैर्गोपैश्च परिवृतः कृष्णो यमुनायास्तटे क्रीडन्नासीत् । क्रीडाप्रसङ्गेन समीपस्थे गभीरे जलाशये पतितस्तस्य कन्दुकः । कालीयो नाम महान् सर्पोऽवसत्तस्मिन् ह्रदे । बहवो धेनवो वत्साश्च तेन हता इति तद्विषये श्रुता विविधाः कथा गोपकुमारैः । सविषं जलं तेन कृतं समन्तात् । स उरगः कथमपि निग्रहीतव्य इति मनसि निश्चित्य कृष्णः क्रीडोपक्रमे समीपस्थं वृक्षमारोहत् । तस्य शाखायाश्च तस्मिन् ह्रद आत्मानमपातयत् । तेन भीताः सर्वे गोपसुता उच्चैराक्रोशन् इतस्ततश्चाधावन् । ततो महान् कोलाहलो जातः । 'कलीयस्य ह्रदे मग्नः कृष्णः कथमधुना क्षेमेण निवर्तेत' इति तेषां महती चिन्ता । अत्रान्तरे व्रजमधावन् केऽपि गोपबाला न्यवेदयंश्च यशोदायै तं वृत्तान्तम् । तच्छ्रुत्वा वृन्दावनमागच्छत् सा भृशं दुःखविह्वला शतशो गोपीभिर्गोपैश्च परिवृता । अमुह्यच्च ह्रदतटे कृष्णमदृष्ट्वा । तदा सर्वे गोपजनाः प्रमुक्तकण्ठमरुदन् श्रीकृष्णं च प्रार्थयन्त । 'भो भगवन् त्वमसि विष्णोरवतारः । कथं तर्हि प्रणश्यसि स्वयमीश्वरः सन् ।

खलनिग्रहे प्रसिद्धं तव कौशलं सामर्थ्यं च। अतस्तं कालीयं यथोचितं दण्डयित्वा शीघ्रं बहिरागच्छ मातरं भक्तांश्चास्वा-



श्वय'। इत्येवं बाष्पगद्गदं यावत्ते प्रार्थयन्ते तावत् महानालोडनशब्दो जातस्तस्मिन् ह्रदे। सहसैव प्रादुरासीत् श्रीकृष्णः

कालीयस्य फणोपरि सलीलं नृत्यन् । संज्ञां प्रापिता यशोदा तादृशं कृष्णं दृष्ट्वा पुनरपि भयाकुलामुह्यत् । ततः सर्वैर्गोपगणैः पुनश्च प्रार्थितः श्रीकृष्णस्तं कालीयं निर्विषं कृत्वा सुदूरं गन्तुमादिश्य च नदीतीरं प्राप्तः । भूयोऽपि संज्ञां लब्ध्वा यशोदा यदा स्वनन्दनं पार्श्वेऽपश्यत् तदा सानन्दं तमालिङ्गत् । मुहुर्मुहुः कोमलं तस्य वदनमचुम्बत् । अश्रुधाराभिश्च तमसिञ्चत् । निराबाधं श्रीकृष्णं पुनरागतं वीक्ष्य सर्वं गोकुलमानन्दितमासीत् । इत्थं कालीयाद् गोकुलं रक्षितवान् लोकोत्तरपराक्रमः स कुमारः ।

**प्रश्नाः**— किमर्थं महान् प्रेमभावो गोपबालानां श्रीकृष्णे? कीदृशोऽसौ जलाशयः? किमकरोत् कृष्णस्तत्र? कृष्णस्य मज्जनं श्रुत्वा किमकुर्वन् यशोदादयो गोप्यः?

**उचितानि विशेषणानि प्रयोजय**—१. कृष्णस्य तनुकान्तिः———— । २.————राधिका । ३.————यशोदा । ४.————गोपबालाः । ५ ————कालीयः । ६.————जलाशयः । ७.————यमुनाजलम् । ८.————गोकुलधेनवः ।

**प्रयोगान्तराणि**—१. अप्रतिमं कृष्णस्य तनुसौष्ठवं पराक्रमश्चालौकिक आसीत । (नञ्–घटितेन वाक्येन भावार्थो वाच्यः ।)

२. कालीयशीर्षे नृत्यन्तं कृष्णं वीक्ष्यापि दुःखितेव यशोदा । (यथापूर्वम् ।)

३. कृष्णेन मुक्तः कालीयो विषहीनोऽभवत् । ( „ )

४. कालीयस्य गमनेन निर्बाधोऽजायत स ह्रदः । ( „ )

# पञ्चत्रिंशः पाठः ।

॥ श्रीः ॥

स्वस्ति । पुण्यपत्तनात्सदाशिवशर्मा मुम्बापुरीस्थं चिरजीविनं विश्वनाथं सस्नेहं सोत्कण्ठमाशीःसहस्रपूर्वकं समालिङ्गय कुशलं वार्तयति । कुशलमिहास्माकं सर्वेषाम् । सानन्दं वाचितं वत्सस्य सन्देशपत्रमस्माभिः । परीक्षायां महद्यशो वत्सेन प्राप्तमिति भृशं प्रमुदिताः सर्वे वयम् । एनमानन्दं निवेशयितुं हृदयस्यावकाशोऽत्यल्प इति मन्यते तव माता । त्वद्विजयेन प्रेरितः प्रभाकर एतादृशीमेव सिद्धिं प्राप्नोम्यहमिति सहर्षं पठनेऽधिकतरं प्रसक्तो भवति । बालो मधुकरस्तावदितस्ततो धावन्सर्वेभ्यः प्रातिवेशिकेभ्यः कथयति सोल्लासं 'सिद्धार्थो ममार्यः परीक्षायाम् । सिद्धार्थो ममार्यः ' इति ।

अधुना यदन्यत्पठनीयं तत्सावधानं पठ्यताम् । 'शरीरमाद्यं खलु सर्वसाधनम्' इति शास्त्रवचनं न कदापि विस्मरणीयं त्वया ।

आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात् ।<br>
ज्ञानं सदाशिवादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ १ ॥

इत्यस्माकं धर्मगुरूणामुपदेशः सर्वथा विद्यार्थिभिर्गृहस्थैश्चानुसरणीयः । अस्तु । त्वदीया कुशलवती वार्ता प्रतिसप्ताहं प्रहेया । इत्यायुष्मति कोटिशः प्रेमाशिषः—

शके १८४९ वैशाखवदि १२ श्यां गुरुवासरे } जोशीकुलोत्पन्नस्य सदाशिवशर्मणः ।

**भावार्थः**—विद्युत्सन्देशवत् संक्षेपेणास्य पत्रस्याशयो निवेदनीयः ।

**ग्रथनम्**—द्वौ पुरुषौ—द्रव्यन्यासः—न्यायाध्यक्षः—साक्षी वृक्षः । इत्यादिभिः प्रमुखपात्रोपकरणैर्युक्ता कापि कथा ग्रथ्यताम् ।

**संशोधनम्**—[ एतेषु वाक्येषु यद्यत् पदमर्थविपर्यासं करोति तद्दर्शय । तस्य तस्य स्थाने युक्तार्थं पदं प्रयोजय च ।]

१. आरोग्येऽरक्षिते मानवस्य चित्तं प्रसन्नं भवति ।

२. किङ्करो नृपं वदति जलमानयेति ।

३. प्रभाते सूर्याभिमुखं यस्तिष्ठति स स्वच्छायां पुरतोऽवलोकयति ।

४. वारणस्य विपुले नेत्रे लघू च कर्णौ शरीरकान्तिं पोषयन्ति ।

# षट्त्रिंशः पाठः ।

॥ श्रीः ॥



स्वस्ति । मुम्बापुर्याः सदाविनीतः पितृभक्तिपरो विश्वनाथः पुण्यपत्तनस्थान् सकलगुणालङ्कृतान् पूज्यतातचरणान् सबहुमानं साष्टाङ्गं प्रणम्य बद्धाञ्जलिर्विज्ञापयति । कुशलं मम भवतामाशीर्वचनेन । उपदेशामृतैः परिपूर्णं भवतां कृपापत्रं निपीतं लोचनैरश्रुपूर्णैर्मया निहितं च हृदये । न कदापि विस्मरामि तातवचनं धर्माज्ञां वा । सर्वथा तदनुरोधेनैव वर्तते मे दिनचर्या ।

अतीते रविवासरे गतवन्तो वयं कतिचित्सहाध्यायिनः समीपस्थं 'घारापुरी' - नाम द्वीपं द्रष्टुम् । सुप्रभातेऽग्निपोतं समारुह्य प्रस्थिता वयं घटिकाद्वयेनैव तत्र प्राप्ताः । वृक्षैस्तृणैश्चावृतं तत्स्थानं विद्यते । वन्यैः पशुभिस्तत्र भाव्यमिति मे निश्चयः । किन्तु नैकोऽपि दृष्टिपथमागतोऽस्माकम् । द्वीपस्य मध्यदेशमुन्नतमधिरुह्य प्रापद्यामहि पाण्डवैरुत्कीर्णं गह्वरम् । अहो विशाला सा गुहा । न जाने कति वर्षाणि यतमानैः

पाण्डवैस्तक्षितं तद्विवरम् । परं तत्रस्था जनाः कथयन्ति यदेकस्यामेव रात्र्यां तदुत्खातं तैर्महापुरुषैरिति । बहवो वीराः साधवो गजा वाजिनश्च भित्तिषु प्रकल्पिताः स्थाने स्थाने दृश्यन्ते । विपुला सुरेखाश्च विद्यन्ते सर्वाः प्रतिमाः । तासु सर्वासु रम्यतमो बृहत्तमश्च वर्तते अर्धनारीनटेश्वरः । तस्मिन् गह्वरे सन्ति केचिज्जलाशयाः । बहु मधुरं शीतलं निर्मलं च तेषां जलम् । महानसं शय्यागारं सभास्थानं देवालय इति भिन्ना विभागाः स्पष्टं निर्दिष्टा अस्यां गुहायाम् । भारतीयशिल्पकलायाः पुरातनी प्रतिमैषा कुतूहलं जनयति प्रेक्षकाणां हृदये । कथमेतादृशो निवासः शक्य आसीत्तस्मिन्काले । रणधीरा अपि शिल्पकारा अभवन् । इति विविधा विचारा उद्भवन्नस्माकं चेतसि । परस्परैः सह संलापं कुर्वन्तो वयं तत्रैवाभुञ्ज्महि विश्रान्तिं चान्वभवाम ।

सायं पुनरग्निपोतमारुह्य निवृत्ता वयं क्षेमेण मुम्बापुरीम् । इत्येतादृशः प्रथमो जलप्रवासोऽङ्गीकृतो मया । मातृभ्यो मदीयः प्रणामो वाच्यः । अनुजेभ्यश्च सस्नेहं ममाशीर्वादः ।

सदाज्ञाविधायी तातचरणानुरक्तः

शके १८४९ ज्येष्ठसुदि ७ म्यां सोमवासरे

जोशीकुलोत्पन्नो विश्वनाथः ।

**भावार्थः**—अस्य पत्रस्य भावार्थं संक्षेपेण कथय ।

**ग्रथनम्**—'साहसे श्रीः प्रतिवसति' इति यस्यास्तात्पर्यं तादृशीं कथां रचय ।

**वाक्यपूरणम्**—



समासाः—अर्धनारीनटेश्वरः—सकलगुणालङ्कृताः—बद्धाञ्जलिः—प्रतिसप्ताहम्—अग्निपोतः—ताताज्ञाविधायी । [ विग्रहाः कार्याः ]

# सप्तत्रिंशः पाठः ।

॥ श्रीः ॥

स्वस्ति । काशीवासपूताचारान् सकलविद्यावदातमानसान् दाक्षिण्यौदार्यादिगुणालङ्कृतान् श्रीमतो हेरम्बशास्त्रिणः पञ्चवट्याः सन्तकुलोत्पन्नो दिवाकरः प्रणामपुरःसरं विज्ञापयति । यदत्राधुना सिंहस्थपर्व वर्तते । बहवो भारतीयाः प्रतिदिनं पञ्चवटीमायान्ति कतिचिद्दिनान्यस्मिन् स्थले निवसन्ति यात्राकृत्यं च साधयन्ति । भगवतो रामचन्द्रस्य निवासेन पावितैषा भूमिः । तपोवने सीतालक्ष्मणाभ्यां समेतः स दाशरथिर्यान्यलौकिकानि चेष्टितानि कृतवांस्तेषां साक्षीभूतानि विविधानि स्थलानि दृश्यन्तेऽत्र भगवत्या गोदावर्या शुचीकृतोऽयं भूप्रदेशः । पुरा किल श्रीशङ्करं तपसा भृशमतोषयत् तपोनिधिर्गौतमः । तदा 'वरं वृणु' इति त्रिनेत्रेणादिष्टः स मुनिरयाचत । 'हे कैलासपतेऽस्मान् दक्षिणापथवासिनो जनान् पावयितुं प्रहिणु स्वर्धुनीं भागीरथीम् । तेन हि सफलं भविष्यत्यस्माकं जीवितम्' इति । अनया प्रार्थनया प्रीतः प्रभुः पार्वतीशः क्षेत्रवरे त्र्यम्बके गिरिशिखरे व्यसृजद् गङ्गाम् । तस्मात्स्थानात्पूर्ववाहिनी निम्नगेयं गोदावरी प्रस्रवति महता वेगेन नासिकं प्रति । अत्र पुनर्दक्षिणां दिशं सा परिवर्तते । तेन नितान्तं पावनोऽसौ जलौघो मालिन्यं प्रमार्ष्टि निकटवर्तिनाम् । विशेषतोऽधुना सिंहस्थे गुरौ पुण्यतरमेतत्तीर्थम् । तस्मादेतत्स्थलं प्रेक्षणीयं भवद्भिरस्मिन्संवत्सरे । क्षेत्रस्था

क्षेत्रस्थान् सम्मानयन्तु दर्शनेन । 'सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवतु ' इतीषत्परिवर्तितं कविवचनं सत्यतां यात्विति विज्ञप्तिः । इति शम् ।

भवदीयः

पञ्चवट्यां संस्कृतपाठशालायां
शके १८४९ श्रावणसुदि २ यां शनौ । } सन्तकुलोत्पन्नो दिवाकरः

**पत्रलेखनम्**—गीर्वाणभाषायां पत्रलेखनस्य या परिपाटिः प्रसिद्धा तस्याः विशेषान् दर्शय ।

छात्रभावेन परिप्लुतं किमपि पत्रं स्वगुरवे प्रेषय । तस्मिन् स्वग्रामस्थस्य कस्यचिन्महापुरुषस्य पराक्रमं वर्णय ।

**पद-परीक्षणम्**—पूतः - पावयितुम् - पुनीता - व्यसृजत् - धारयन्ती - सोत्कण्ठाः - प्रमार्ष्टि - इत्यादीनां पदानां प्रक्रिया स्पष्टीक्रियताम् ।

**अर्थसम्बन्धः**—आभाणकस्योदाहरणं तस्यैवाङ्केन प्रदर्शय ।

| [ आभाणकः ] | [ उदाहरणम् ] |
|---|---|
| ( १ ) यथा बीजं तथा वृक्षो यथा वृक्षस्तथा फलम् । | (   ) दारिद्र्यग्रस्तो दुर्जनत्रस्तोऽपि तुकारामः सर्वदा स्थिरचित्तोऽभवत् । |
| ( २ ) तेजसां न हि वयः समीक्ष्यते । | (   ) सर्वेभ्यः सङ्कटेभ्यः सखा श्रीकृष्णः पाण्डवानरक्षत् । |
| ( ३ ) स नाम जयिनां जयी जयति यो निजं मानसम् । | (   ) कुमारोऽप्यभिमन्युः कौरवाणां चक्रव्यूहं प्राविशत् । |
| ( ४ ) मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः । | (   ) लवकुशयोः पराक्रमो रामसदृश एवासीत् । |

# अष्टात्रिंशः पाठः ।

## दुर्योधन–भीमयोर्युद्धम् ।

-:०:-

भाग्यश्रिया विरहितो हतबन्धुवर्गो
दुर्योधनोऽपि तनुपालनमात्रकार्यः ।
द्वैपायनं ह्रदमुपेत्य निलीय तस्मिन्
संस्तम्भिताम्भसि भुजङ्ग इवावतस्थे ॥ १ ॥

तत्राप्यदत्तावसराः प्रवृत्तिं
ते पाण्डवास्तस्य कुतोऽप्यवाप्य ।
जिघांसवः शीघ्रमनुप्लुतास्तं
शत्रुं महान्तोऽपि न शेषयन्ति ॥ २ ॥

ते वासुदेवप्रतिपन्नरश्मिं
पञ्चैकमारुह्य रथं प्रयाताः ।
द्विषन्तमप्राप्य तदीयमीषु–
र्लक्ष्मापि संलक्षयितुं ह्रदान्ते ॥ ३ ॥

जलोपसीम्नि द्विषतः पदानि
दृष्ट्वा तमन्तर्जलसन्निविष्टम् ।
सर्वेऽवजग्मुर्गदया च तानि
निर्लोडयामास पयांसि भीमः ॥ ४ ॥

अथाकुलग्राहगणः समन्तात्
क्षुभ्यत्प्रवाहाप्लुतसैकतान्तः ।
स मन्दरान्दोलितसिन्धुलीलां
ह्रदो गदाविद्धजलः प्रपेदे ॥ ५ ॥

यन्नोदतिष्ठत् पयसस्तथापि
दुर्योधनस्तद्धि तुदन्नतीव ।

वाचाम्बुवाहध्वनिधीरयैनं
युधिष्ठिरोऽभर्त्सयदेवमुच्चैः ॥ ६ ॥
धिगस्तु दुर्योधन तेऽभिमानं
त्यक्त्वा तदैश्वर्यमयुध्यमानः ।
प्रच्छादितात्मा निवसन्ननार्य
जिजीविषेर्यत् क्षपितस्ववर्गः ॥ ७ ॥

विहाय लक्ष्मीं बहु मन्यसे किं
ह्रदाम्बुगर्भे वसतिं जघन्याम् ।
विनाश्य वा वल्गु यशःशरीरं
जुगुप्सितं भौतिक-पिण्डमात्रम् ॥ ८ ॥
न लङ्घनं वैरकृतं सहन्ते
जेतुं यथाशक्ति यतन्त एव ।
अन्तं च वीरा युधि कामयन्ते
शत्रौ बलीयस्यपि मानवन्तः ॥ ९ ॥
एते वयं पञ्च जिगीषवस्त्वा-
मतस्त्वमुत्तिष्ठ, लभस्व युद्धे ।
निहत्य शत्रूनिह वाधिपत्यं
वीरोचितां प्रेत्य गतिं हतो वा ॥ १० ॥

किं भूयसोक्तेन गृहाण शस्त्रं
युध्यस्व केनापि निजेच्छया नः ।
हन्याश्च यद्येकतरं कृती त्वं
जीवन् पुनर्भुङ्क्ष्व सुखेन राज्यम् ॥ ११ ॥
वाक्सायकैरेवमतीव विद्धः
सुयोधनो मानधनो विजेत्रा ।
तोत्रार्दितो नाग इवासहिष्णु-
र्ह्रदान्तरादाविरभूद् गदाभृत् ॥ १२ ॥

दिक्पालकल्पैरनुजैश्चतुर्भि-
रन्वीयमानं हरिणा च साक्षात् ।
शर्वोपमं तं नृपतिं ददर्श
दुर्योधनो मन्युनिरस्तधैर्यः ॥ १३ ॥

स तिर्यगालोक्य पृथातनूजान्
भोगीव निःश्वस्य वृथाभिमानी ।
शिरो महाभोगनिभं विधुन्वन्
वचोविषं दुःसहमुज्जगार ॥ १४ ॥

लिप्से न राज्यं न जिजीविषामि
परन्तु वैरप्रतियातनाय ।
दुःशासनस्य द्विषतायमार्द्रौ
योत्स्ये यथाशक्ति वृकोदरेण ॥ १५ ॥

निगद्य वाक्यं सविकत्थमित्थं
गदामथोद्धृत्य तरुप्रमाणान् ।
करं समास्फाल्य करीय योद्धु
भेजे तटं जीवितनिर्व्यपेक्षः ॥ १६ ॥

मयैव युद्धं प्रथमं तवास्तु
सम्प्राप्तमेतच्चरमं च विद्धि ।
इति ब्रुवन्नाप धृतायुधस्तं
वृकोदरः काल इवात्तदण्डः ॥ १७ ॥

घूर्णद्रदं संववृतेऽथ दीर्घं
युद्धं तयोर्घोरमुदग्रबाह्वोः ।
अन्योन्यमुत्पीडयतोः सवेगं
प्रमत्तयोर्वारणयोर्यद्वोर्वा ॥ १८ ॥

मुहुस्तयोः पार्ष्णितलाभिघातैः
सवृक्षशैला क्षितिराप कम्पम् ।

दिशां मुखेष्वप्यवगुण्ठनानि
रजांसि तेनुर्भृशमुत्थितानि ॥ १९ ॥

अथान्तरे यादवदत्तसंज्ञां
तितीर्षुणा पूर्वकृतां प्रतिज्ञाम् ।
भीमेन गुर्व्या गदया सशब्दं
भग्नोरुरुर्व्यां निपपात वैरी ॥ २० ॥

गदाहतं तं च विसंज्ञमेव
पदा सरोषं शिरसि स्पृशन्तम् ।
निवारयन् द्रागनुजं भुजाभ्या-
मारोपयद् यानमजातशत्रुः ॥ २१ ॥

[ पाण्डवविजये ]

**प्रश्नाः**—कुत्र निलीनो दुर्योधनः ? किमर्थम् ? केऽगच्छन् मार्गयितुं तम् ? तत्र किमकरोद्भीमः ? कदा बहिरागतो दुर्योधनः ? केन सह सोऽयुध्यत ? कथं पतितो दुर्योधनः ?

**परीक्षणम्**—को रसः प्रधानोऽस्मिन्काव्ये ? के श्लोका रम्यतमाः सन्ति ? तदपि कस्मात्कारणात् ?

पञ्चमे दशमे नवदशे च श्लोके कानि कानि पदानि बहुशो दृश्यन्ते ? तेषां पठनेन को भावो मनस्युद्भवति ?

**स्वभाववर्णनम्**—कीदृशः स्वभावो भीमस्यात्र दृश्यते ? दुर्योधनस्य के गुणा दोषाश्च सूचिताः कविना ? कथंभूतः पुनर्युधिष्ठिरः ? कस्य साहाय्येन विजयिनः पाण्डवा अभवन् ? केन कारणेनैवमनुरक्तः स पाण्डवेषु ? केनोपमितौ तौ योद्धारौ कविना ?

स्थाने स्थाने केनोपमितो दुर्योधनः ( १-१२-१४-१६ ) ।

**सुभाषितानि**—'शत्रुं महान्तोऽपि न शेषयन्ति'।—एतादृशानि कतिचित् सुभाषितानि कथय ।

**समासाः**—अव्ययीभावस्य बहुव्रीहेश्चोदाहरणानि प्रदर्शय ।

# सङ्कीर्ण-पद्यानि ।



**विद्या**—अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति ।
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ॥ १ ॥

श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥ २ ॥

द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां गता ।
सुभाषितरसं दृष्ट्वा सुधा भीता दिवं गता ॥ ३ ॥

खिन्नं चापि सुभाषितेन रमते स्वीयं मनः सर्वदा
श्रुत्वान्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति ।
अज्ञाञ्ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्
कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः सङ्ग्रहः ॥ ४ ॥

नायं प्रयाति विकृतिं विरसो न यः स्या-
न्न क्षीयते बहुजनैर्नितरां निपीतः ।
जाड्यं निहन्ति रुचिमेति करोति तृप्तिं
नूनं सुभषितरसोऽन्यरसातिशायी ॥ ५ ॥

✓ न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनात् प्रधानम् ॥ ६ ॥

मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा ।
इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ ७ ॥

**सज्जनाः**—अहो किमपि चित्राणि चरित्राणि महात्मनाम् ।
धनं तृणाय मन्यन्ते तद्भरेण नमन्त्यपि ॥ ८ ॥
नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः ।
अन्ये बदरिकाकारा बहिरेव मनोहराः ॥ ९ ॥
यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः ।
चित्ते वाचि क्रियायां च महतामेकरूपता ॥ १० ॥

मनस्यन्यद्वचस्यन्यत् कर्मण्यन्यद्दुरात्मनाम् ।
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ ११ ॥

अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदा लोकहिते युक्ता रत्नदीपा इवोत्तमाः ॥ १२ ॥

शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ १३ ॥

किं मधुना किं विधुना किं सुधया किं वसुधयाखिलया ।
यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम् ॥ १४ ॥

सज्जनस्य हृदयं नवनीतं यद्वदन्ति कवयस्तदलीकम् ।
अन्यदेहविलसत्परितापात् सज्जनो द्रवति नो नवनीतम् ॥ १५ ॥

शुद्धः स एव कुलजश्च स एव धीरः
श्लाघ्यो विपत्स्वपि न मुञ्चति यः स्वभावम् ।
तप्तं यथा दिनकरस्य मरीचिजालै-
र्देहं त्यजेदपि हिमं न तु शीतलत्वम् ॥ १६ ॥

कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः
कस्माद्वा जलधारयैव धरणीं धाराधरः सिञ्चति ।
श्रामं श्राममयं च नन्दयति वा कस्मात्त्रिलोकीं रविः
साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥ १७ ॥

दुर्जनाः—तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः ।
वृश्चिकस्य विषं पुच्छे सर्वाङ्गे दुर्जनो विषम् ॥ १८ ॥

खलानां धनुषां चापि सद्वंशजनुषामपि ।
गुणलाभो भवेदाशु परहृच्छेदकारकः ॥ १९ ॥

बहु निष्कपटद्रोही बहुधान्योपघातकः ।
रन्ध्रान्वेषी च सर्वत्र दूषको मूषको यथा ॥ २० ॥

अन्यस्य लगति कर्णे जीवितमन्यस्य हरति बाण इव ।
हृदयं दुनोति पिशुनः कण्टक इव पादलग्नोऽपि ॥ २१ ॥

विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतद् ज्ञानाय दानाय च रक्षणाय ॥ २२ ॥

संवर्धितोऽपि भुजगः पयसा न वश्यः
स्वान्पालकानपि निहन्ति बलेन सिंहः ।
दुष्टः परैरुपकृतस्तदनिष्टकारी
विश्वासलेश इह नैव बुधैर्विधेयः ॥ २३ ॥

**धीराः**—कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा याति कदाचिदेव ॥ २४ ॥

रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥ २५ ॥

भुजे विशाले विमलेऽसिपत्रे कोऽन्यस्य तेजस्विकथां सहेत ।
गतासुरप्याहवसीम्नि वीरो द्विधा विधत्ते रविमण्डलं यः ॥ २६ ॥

को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्तथा
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद्दंष्ट्रानखलाङ्गुलप्रहरणः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ २७ ॥

वह्निं शीतयितुं हिमं ज्वलयितुं वातं निरोद्धुं पयो
मूर्तं व्योम विधातुमुन्नमयितुं नेतुं नतिं वा महीम् ।
उद्धर्तुं किल भूभृतः स्थलयितुं सिन्धुं च सम्भाव्यते
शक्तिर्यस्य जनैः स एव नृपतिः शेषाः परं पार्थिवाः ॥ २८ ॥

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥ २९ ॥

सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ३० ॥

हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्राङ्कुशो
वज्रेणापि हताः पतन्ति गिरयः किं शैलमात्रः पविः ।
दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तमः
तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥ ३१ ॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं
शूरस्त्वं वाददर्पज्वरशमनविधावक्षयं पाटवं नः ।
सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन् गतोऽस्मि ॥ ३२ ॥

[स्व]भावः—विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥ ३३ ॥

न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ ३४ ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ३५ ॥

व्याघ्रः सेवति काननं सुगहनं सिंहो गुहां सेवते
हंसः सेवति पद्मिनीं विकसितां गृध्रः श्मशानस्थलीम् ।
साधुः सेवति साधुमेव सततं नीचोऽपि नीचं जनं
या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥ ३६ ॥

[व]ाणी—वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याच्चोपकारोऽपि नेष्टः ।
किं तद् द्रव्यं कोकिलेनोपनीतं को वा लोके गर्दभस्यापराधः ॥ ३७ ॥

कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं कीर्तिं सूते दुष्कृतं या हिनस्ति ।
तां चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः ॥ ३८ ॥

तथ्यं पथ्यं सहेतु प्रियमितमृदुलं सारवद्दैन्यहीनं
साभिप्रायं दुरापं सविनयमशठं चित्रमल्पाक्षरं च ।

बह्वर्थं कोपशून्यं स्मितयुतधनदाक्षिण्यसन्देहहीनं
वाक्यं ब्रूयाद्रसज्ञः परिषदि समये सप्रमेयाप्रमत्तम् ॥ ३९ ॥

**सत्सङ्गतिः**—महाजनस्य संसर्गः कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥ ४० ॥

कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ ४१ ॥

कल्पद्रुमः कल्पितमेव सूते सा कामधुक् कामितमेव दोग्धि ।
चिन्तामणिश्चिन्तितमेव दत्ते सतां तु सङ्गः सकलं प्रसूते ॥ ४२ ॥

असज्जनः सज्जनसङ्गिसङ्गात् करोति दुःसाध्यमपीह साध्यम् ।
पुष्पाश्रयात् शम्भुशिरोऽधिरूढा पिपीलिका चुम्बति चन्द्रबिम्बम् ॥ ४३ ॥

गङ्गेवाघविनाशिनी जनमनःसन्तोषसच्चन्द्रिका
तीक्ष्णांशोरपि सत्प्रभेव जगदज्ञानान्धकारापहा ।
छायेवाखिलतापनाशनकरी स्वर्धेनुवत्कामदा
पुण्यैरेव हि लभ्यते सुकृतिभिः सत्सङ्गतिर्दुर्लभा ॥ ४४ ॥

बुद्धिं वर्धयति श्रियं वितनुते वैदग्ध्यमामुञ्चति
श्रेयः पल्लवयत्यघानि दलयत्युन्मीलयत्युन्नतिम् ।
विज्ञानं परिशोधयत्युपचिनोत्युच्चैः कलाकौशलं
किं किं नारभते हरेरिव कथाजयं सतां सङ्गतम् ॥ ४५ ॥

**चित्रश्लोकाः**—पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः ।
चलते वायुवेगेन पदमेकं न गच्छति ॥ ४६ ॥ (१)

कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी ।
पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डितः ॥ ४७ ॥ (२)

वृक्षाग्रवासी न च पक्षिराजस्त्रिनेत्रधारी न च शङ्करोऽयम् ।
त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः ॥४८॥ (३)

(१) कुलालस्य चक्रदण्डौ (२) लेखनी (३) नारिकेलफलम्

सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशनः
सर्पो नैव बिलेशयोऽखिलनिशाचारी न भूतोऽपि च ।
अन्तर्धानपटुर्न सिद्धपुरुषो नाप्याशुगो मारुत-
स्तीक्ष्णास्यो न तु सायकस्तमिह ये जानन्ति ते पण्डिताः ॥४९॥ (१)

कुमारसम्भवं दृष्ट्वा रघुवंशे मनोऽदधात् ।
राक्षसानां कुलश्रेष्ठो रामो राजीवलोचनः ॥ ५० ॥ (२)

तातेन कथितं पुत्र लेखं लिख ममाज्ञया ।
न तेन लिखितो लेखः पितुराज्ञा न लोपिता ॥ ५१ ॥ (३)

द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ।
तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥ ५२ ॥ (४)

लम्बोदर तव चरणावादरतो यो न पूजयति ।
स भवति विश्वामित्रो दुर्वासा गोतमश्चेति ॥ ५३ ॥ (५)

विराटनगरे राजन् कीचकादुपकीचकम् ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ५४ ॥ (६)

अम्लानपङ्कजा माला कण्ठे रामस्य सीतया ।
मुधा बुधा भ्रमन्त्यत्र प्रत्यक्षेपि क्रियापदं ॥ ५५ ॥ (७)

सन्ध्यावन्दनवेलायां तडागान्ते द्विजोत्तमैः ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ५६ ॥ (८)

अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च ।
ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम् ॥ ५७ ॥ (९)

(१) मत्कुणः (२) राक्षसानां कुमारसंभवं नाम पृथिवीपीडनं दृष्ट्वा—इत्यन्वयः । (३) न तेन-नतेन । (४) द्वन्द्व—स्त्रीपुरुषौ । द्विगु —द्वौ गावौ यस्य । अव्ययी-भावः—न व्ययः । तत्पुरुष—तस्मात् हे पुरुष । बहुव्रीहिः—बहुधान्यविशिष्टः । (५) विश्वस्य अमित्रो नाम शत्रुः । दुर्वासा नाम मलिनवस्त्र । गोतमो नाम पशुः । (६) विः नाम पक्षी । आट नाम अभ्रमत् । (७) 'प्रत्यक्षेपि' नाम क्षेपा । (८) द्विजोत्तम ऐः नाम आगच्छ । (९) हे ब्राह्मण इभ्यः नाम धनिकः ददाति इति कर्तृपदं गुप्तम् ।

एहि हे रमणि पश्य कौतुकं धूलिधूसरतनुं दिगम्बरम् ।
सापि तद्वदनपङ्कजं पपौ भ्रातरुक्तमपि किं न बुध्यते ॥ ५८ ॥ (१)

सीमन्तिनीषु का शान्ता राजा कोऽभूद्गुणोत्तमः ।
विद्वद्भिः का सदा वन्द्या अत्रैवोक्तं न बुध्यते ॥ ५९ ॥ (२)

भोजनान्ते च किं पेयं जयन्तः कस्य वै सुतः ।
कथं विष्णुपदं प्रोक्तं तक्रं शक्रस्य दुर्लभम् ॥ ६० ॥

कं संजघान कृष्णः का शीतलवाहिनी गङ्गा ।
के दारपोषणरताः कं बलवन्तं न बाधते शीतम् ॥ ६१ ॥ (३)

का पाण्डुपत्नी गृहभूषणं किं को रामशत्रुः किमगस्त्यजन्म ।
कः सूर्यपुत्रो विपरीतपृच्छा कुन्ती सुतो रावणकुम्भकर्णाः ॥ ६२ ॥

**सामान्यनीतिः**—ऋणशेषश्चाग्निशेषः शत्रुशेषस्तथैव च ।
पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न रक्षयेत् ॥ ६३ ॥

आत्मबुद्धिः सुखायैव गुरुबुद्धिर्विशेषतः ।
परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयावहा ॥ ६४ ॥

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखे हतः ॥ ६५ ॥

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ ६६ ॥

जननी जन्मभूमिश्च जाह्नवी च जनार्दनः ।
जनकः पञ्चमश्चैव जकाराः पञ्च पूजिताः ॥ ६७ ॥

भारतः पञ्चमो वेदः सुपुत्रः सप्तमो रसः ।
दाता पञ्चदशं रत्नं जामाता दशमो ग्रहः ॥ ६८ ॥

---

(१) कौ नाम भूमौ । तुकं नाम बालकम् । (२) चरणस्य आद्यन्ताक्षरयोः मेलनेन उत्तरम्–सीता–रामः–विद्या । (३) चरणाद्यपदयोः संयोगेन प्रश्नस्य उत्तरं लभ्यते कंसं–काशी–केदार–कंबलवन्तम् ।

मनो मधुकरो मेघो मानिनी मदनो मरुत् ।
मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः ॥ ६९ ॥

अन्नदानात्परं दानं विद्यादानमतः परम् ।
अन्नेन क्षणिका तृप्तिर्यावज्जीवं च विद्यया ॥ ७० ॥

यः पठति लिखति पश्यति परिपृच्छति पण्डितानुपास्यति ।
तस्य दिवाकरकिरणैर्नलिनीदलमिव विकास्यते बुद्धिः ॥ ७१ ॥

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥ ७२ ॥

किं वाससा तत्र विचारणीयं वासः प्रधानं खलु योग्यतायाः ।
पीताम्बरं वीक्ष्य ददौ स्वकन्यां चर्माम्बरं वीक्ष्य विषं समुद्रः ॥ ७३ ॥

दाक्षिण्यं स्वजने दया परजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जनेष्वार्जवम् ।
शौर्यं शत्रुजने क्षमा परिजने नारीजने धूर्तता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ ७४ ॥

# द्वितीयो गणः (अदादिः)

या—to go – (परस्मैपदम्) – 'आ' कारान्ताः सर्वे धातवः

| | वर्तमानकालः (लट्)* | | | भूतकालः (लङ्) | | |
|---|---|---|---|---|---|---|
| प्र. पु. | यामि | यावः | यामः | अयाम् | अयाव | अयाम |
| द्वि. पु. | यासि | याथः | याथ | अयाः | अयातम् | अयात |
| तृ. पु. | याति | यातः | यान्ति | अयात् | अयाताम् | अयान्-अयुः |

| | आज्ञार्थः (लोट्) | | | विध्यर्थः (लिङ्) | | |
|---|---|---|---|---|---|---|
| प्र. पु. | यानि | याव | याम | यायाम् | यायाव | यायाम |
| द्वि. पु. | याहि | यातम् | यात | यायाः | यायातम् | यायात |
| तृ. पु. | यातु | याताम् | यान्तु | यायात् | यायाताम् | यायुः |

[ख्या (to tell) – दा (to cut) – पा (to protect) – भा (to shine to feel) – मा (to measure) – वा (to blow) – स्ना (to bathe)]

## Terminations (प्रत्यय)

| वर्तमानकालः (लट्) | | | | | | भूतकालः (लङ्) | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| (परस्मैपद) | | | (आत्मनेपद) | | | (परस्मैपद) | | | (आत्मनेपद) | | |
| मि | वस् | मस् | ए | वहे | महे | अम् | व | म | इ | वहि | महि |
| सि | थस् | थ | से | आथे | ध्वे | स् | तम् | त | थास् | आथाम् | ध्वम् |
| ति | तस् | अन्ति | ते | आते | अते | त् | ताम् | अन् | त | आताम् | अत |

| आज्ञार्थः (लोट्) | | | | | | विध्यर्थः (लिङ्) | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| (प. प.) | | | (आ. प.) | | | (प. प.) | | | (आ. प.) | | |
| आनि | आव | आम | ऐ | आवहै | आमहै | याम् | याव | याम | ईय | ईवहि | ईमहि |
| हि | तम् | त | स्व | आथाम् | ध्वम् | याः | यातम् | यात | ईथाः | ईयाथाम् | ईध्वम् |
| तु | ताम् | अन्तु | ताम् | आताम् | अताम् | यात् | याताम् | युः | ईत | ईयाताम् | ईरन् |

* All the other roots of this conjugation are irregular. There is no special conjugational sign here.

[The terminations in bold type are strong (पित्) and those in small type are weak (अपित्) Note the changes that take place when they are applied to the different roots. Observe these terminations as distinguished from those in the First Reader.]

### इ – to go (परस्मैपदम्)

| | वर्तमानकालः | | | भूतकालः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | एमि | इवः | इमः | आयम् | ऐव | ऐम |
| द्वि. पु. | एषि | इथः | इथ | ऐः | ऐतम् | ऐत |
| तृ. पु. | एति | इतः | यन्ति | ऐत् | ऐताम् | आयन् |

| | आज्ञार्थः | | | विध्यर्थः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | अयानि | अयाव | अयाम | इयाम् | इयाव | इयाम |
| द्वि. पु. | इहि | इतम् | इत | इयाः | इयातम् | इयात |
| तृ. पु. | एतु | इताम् | यन्तु | इयात् | इयाताम् | इयुः |

### अधि+इ – to study (आत्मनेपदम्)

| | वर्तमानकालः | | | भूतकालः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | अधीये | अधीवहे | अधीमहे | अध्यैयि | अध्यैवहि | अध्यैमहि |
| द्वि. पु. | अधीषे | अधीयाथे | अधीध्वे | अध्यैथाः | अध्यैयाथाम् | अध्यैध्वम् |
| तृ. पु. | अधीते | अधीयाते | अधीयते | अध्यैत | अध्यैयाताम् | अध्यैयत |

| | आज्ञार्थः | | | विध्यर्थः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | अध्ययै | अध्ययावहै | अध्ययामहै | अधीयीय | अधीयीवहि | अधीयीमहि |
| द्वि. पु. | अधीष्व | अधीयाथाम् | अधीध्वम् | अधीयीथाः | अधीयीयाथाम् | अधीयीध्वम् |
| तृ. पु. | अधीताम् | अधीयाताम् | अधीयताम् | अधीयीत | अधीयीयाताम् | अधीयीरन् |

### शी – to lie down (आत्मनेपदम्)

| | वर्तमानकालः | | | भूतकालः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | शये | शेवहे | शेमहे | अशयि | अशेवहि | अशेमहि |
| द्वि. पु. | शेषे | शयाथे | शेध्वे | अशेथाः | अशयाथाम् | अशेध्वम् |
| तृ. पु. | शेते | शयाते | शेरते | अशेत | अशयाताम् | अशेरत |

| | आज्ञार्थः | | | विध्यर्थः | | |
|---|---|---|---|---|---|---|
| . पु. | शयै | शयावहै | शयामहै | शयीय | शयीवहि | शयीमहि |
| द्वि. पु. | शेष्व | शयाथाम् | शेध्वम् | शयीथाः | शयीयाथाम् | शयीध्वम् |
| . पु. | शेताम् | शयाताम् | शेरताम् | शयीत | शयीयाताम् | शयीरन् |

शी become शे before all terminations. शी + ए = शे + ए : शय् + ए = शये । शी + अते = शे + अते = शेर् + अते=शेरते ( शेर् before hird personp lural ) । ]

स्तु ‡ – to praise (परस्मैपदम्)

| | वर्तमानकालः | | | भूतकालः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | स्तौमि<br>स्तवीमि | स्तुवः<br>स्तुवीवः | स्तुमः<br>स्तुवीमः | अस्तवम् | अस्तुव<br>अस्तुवीव | अस्तुम<br>अस्तुवीम |
| द्वि. पु. | स्तौषि<br>स्तवीषि | स्तुथः<br>स्तुवीथः | स्तुथ<br>स्तुवीथ | अस्तौः<br>अस्तवीः | अस्तुतम्<br>अस्तुवीतम् | अस्तुत<br>अस्तुवीत |
| तृ. पु. | स्तौति<br>स्तवीति | स्तुतः<br>स्तुवीतः | स्तुवन्ति | अस्तौत्<br>अस्तवीत् | अस्तुताम्<br>अस्तुवीताम् | अस्तुवन् |

| | आज्ञार्थः | | | विध्यर्थः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | स्तवानि | स्तवाव | स्तवाम | स्तुयाम्<br>स्तुवीयाम् | स्तुयाव<br>स्तुवीयाव | स्तुयाम<br>स्तुवीयाम |
| द्वि. पु. | स्तुहि<br>स्तुवीहि | स्तुतम्<br>स्तुवीतम् | स्तुत<br>स्तुवीत | स्तुयाः<br>स्तुवीयाः | स्तुयातम्<br>स्तुवीयातम् | स्तुयात<br>स्तुवीयात |
| तृ. पु. | स्तौतु<br>स्तवीतु | स्तुताम्<br>स्तुवीताम् | स्तुवन्तु | स्तुयात्<br>स्तुवीयात् | स्तुयाताम्<br>स्तुवीयाताम् | स्तुयुः<br>स्तुवीयुः |

[ स्तु+मि=स्तौ+मि = स्तौमि । स्तु+मि = स्तो+ई+मि = स्तव्+ई+मि = स्तवीमि ]
[स्तु + मः = स्तुमः । स्तु + मः = स्तु+ई + मः = स्तुव् + ई + मः = स्तुवीमः]

‡ ई is optionally added to स्तु before terminations beginning with a consonant.

‡ रु is conjugated just like स्तु; क्षु and नु have all forms like the first forms of स्तु and do not take the optional ई.

## स्तु – to praise (आत्मनेपदम्)

**वर्तमानकालः**

| | | | |
|---|---|---|---|
| प्र. पु. | स्तुवे | स्तुवहे / स्तुवीवहे | स्तुमहे / स्तुवीमहे |
| द्वि. पु. | स्तुषे / स्तुवीषे | स्तुवाथे | स्तुध्वे / स्तुवीध्वे |
| तृ. पु. | स्तुते / स्तुवीते | स्तुवाते | स्तुवते |

**भूतकालः**

| | | |
|---|---|---|
| अस्तुवि | अस्तुवहि / अस्तुवीवहि | अस्तुमहि / अस्तुवीमहि |
| अस्तुथाः / अस्तुवीथाः | अस्तुवाथाम् | अस्तुध्वम् / अस्तुवीध्वम् |
| अस्तुत / अस्तुवीत | अस्तुवाताम् | अस्तुवत |

**आज्ञार्थः**

| | | | |
|---|---|---|---|
| प्र. पु. | स्तवै | स्तवावहै | स्तवामहै |
| द्वि. पु. | स्तुष्व / स्तुवीष्व | स्तुवाथाम् | स्तुध्वम् / स्तुवीध्वम् |
| तृ. पु. | स्तुताम् / स्तुवीताम् | स्तुवाताम् | स्तुवताम् |

**विध्यर्थः**

| | | |
|---|---|---|
| स्तुवीय | स्तुवीवहि | स्तुवीमहि |
| स्तुवीथाः | स्तुवीयाथाम् | स्तुवीध्वम् |
| स्तुवीत | स्तुवीयाताम् | स्तुवीरन् |

## ब्रू – to speak (परस्मैपदम्)

**वर्तमानकाल**

| | | | |
|---|---|---|---|
| प्र. पु. | ब्रवीमि | ब्रूवः | ब्रूमः |
| द्वि. पु. | ब्रवीषि / आत्थ | ब्रूथः / आहथुः | ब्रूथ |
| तृ. पु. | ब्रवीति / आह | ब्रूतः / आहतुः | ब्रुवन्ति / आहुः |

**भूतकालः**

| | | |
|---|---|---|
| अब्रवम् | अब्रूव | अब्रूम |
| अब्रवीः | अब्रूतम् | अब्रूत |
| अब्रवीत् | अब्रुताम् | अब्रुवन् |

[ ब्रू + मि = ब्रो + ई + मि = ब्रव् + ई + मि = ब्रवीमि । ]

[ अ + ब्रू + अन् = अ + ब्रुव् + अन् = अब्रुवन् ]

**आज्ञार्थः**

| | | | |
|---|---|---|---|
| प्र. पु. | ब्रवाणि | ब्रवाव | ब्रवाम |
| द्वि. पु. | ब्रूहि | ब्रूतम् | ब्रूत |
| तृ. पु. | ब्रवीतु | ब्रूताम् | ब्रुवन्तु |

**विध्यर्थः**

| | | |
|---|---|---|
| ब्रूयाम् | ब्रूयाव | ब्रूयाम |
| ब्रूयाः | ब्रूयातम् | ब्रूयात |
| ब्रूयात् | ब्रूयाताम् | ब्रूयुः |

## ब्रू – to speak † (आत्मनेपदम्)

| वर्तमानकालः | | | | भूतकालः | |
|---|---|---|---|---|---|
| प्र. पु. ब्रवे | ब्रूवहे | ब्रूमहे | अब्रुवि | अब्रूवहि | अब्रूमहि |
| द्वि. पु. ब्रूषे | ब्रुवाथे | ब्रूध्वे | अब्रूथाः | अब्रुवाथाम् | अब्रूध्वम् |
| तृ. पु. ब्रूते | ब्रुवाते | ब्रुवते | अब्रूत | अब्रुवाताम् | अब्रुवत |

| आज्ञार्थः | | | | विध्यर्थः | |
|---|---|---|---|---|---|
| प्र. पु. ब्रवै | ब्रवावहै | ब्रवामहै | ब्रुवीय | ब्रुवीवहि | ब्रुवीमहि |
| द्वि. पु. ब्रूष्व | ब्रुवाथाम् | ब्रूध्वम् | ब्रुवीथाः | ब्रुवीयाथाम् | ब्रुवीध्वम् |
| तृ. पु. ब्रूताम् | ब्रुवाताम् | ब्रुवताम् | ब्रुवीत | ब्रुवीयाताम् | ब्रुवीरन |

## अस् – to be (परस्मैपद) [This root is very irregular.]

| | वर्तमानकालः | | | भूतकालः | | |
|---|---|---|---|---|---|---|
| प्र. पु | अस्मि | स्वः | स्मः | आसम् | आस्व | आस्म |
| द्वि. पु. | असि | स्थः | स्थ | आसीः | आस्तम् | आस्त |
| तृ. पु. | अस्ति | स्तः | सन्ति | आसीत् | आस्ताम् | आसन् |

| | आज्ञार्थः | | | विध्यर्थ | | |
|---|---|---|---|---|---|---|
| प्र. पु. | असानि | असाव | असाम | स्याम् | स्याव | स्याम |
| द्वि. पु. | एधि | स्तम् | स्त | स्याः | स्यातम् | स्यात |
| तृ. पु | अस्तु | स्ताम् | सन्तु | स्यात् | स्याताम् | स्युः |

## अस् – to be (आत्मनेपदम्)

| | वर्तमानकालः | | | भूतकालः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | हे | स्वहे | स्महे | आसि | आस्वहि | आस्महि |
| द्वि. पु. | से | साथे | ध्वे | आस्थाः | आसाथाम् | आध्वम् |
| तृ. पु. | स्ते | साते | सते | आस्त | आसाताम् | आसत |

| | आज्ञार्थः | | | विध्यर्थः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | **असै** | **असावहै** | **असामहै** | सीय | सीवहि | सीमहि |
| **द्वि. पु.** | **स्व** | **आथाम्** | **ध्वम्** | सीथाः | सीयाथाम् | सीध्वम् |
| **तृ. पु.** | **स्ताम्** | **साताम्** | **सताम्** | सीत | सीयाताम् | सीरन् |

---

† **सू** (**Atm.**) - to give birth to is conjugated like ब्रू (Atmane-pa**da**) except imperative 1st person (**सुवै-सुवावहै-सुवामहै**)

## आस् – to sit (आत्मनेपदम्)

| | वर्तमानकालः | | | भूतकालः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | आसे | आस्वहे | आस्महे | आसि | आस्वहि | आस्महि |
| द्वि. पु. | आस्से | आसाथे | आध्वे | आस्थाः | आसाथाम् | आध्वम् |
| तृ. पु. | आस्ते | आसाते | आसते | आस्त | आसाताम् | आसत |

| | आज्ञार्थः | | | विध्यर्थः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | आसै | आसावहै | आसामहै | आसीय | आसीवहि | आसीमहि |
| द्वि. पु. | आस्स्व | आसाथाम् | आध्वम् | आसीथाः | आसीयाथाम् | आसीध्वम् |
| तृ. पु. | आस्ताम् | आसाताम् | आसताम् | आसीत | आसीयाताम् | आसीरन् |

## अद् – to eat (परस्मैपदम्)

| | वर्तमानकालः | | | भूतकालः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | अद्मि | अद्वः | अद्मः | आदम् | आद्व | आद्म |
| द्वि. पु. | अत्सि | अत्थः | अत्थ | आदः | आत्तम् | आत्त |
| तृ. पु. | अत्ति | अत्तः | अदन्ति | आदत् | आत्ताम् | आदन् |

| | आज्ञार्थः | | | विध्यर्थः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | अदानि | अदाव | अदाम | अद्याम् | अद्याव | अद्याम |
| द्वि. पु. | अद्धि | अत्तम् | अत्त | अद्या | अद्यातम् | अद्यात |
| तृ. पु. | अत्तु | अत्ताम् | अदन्तु | अद्यात् | अद्याताम् | अद्युः |

## * श्वस् – to breathe (परस्मैपदम्)

| | वर्तमानकालः | | | भूतकालः | | |
|---|---|---|---|---|---|---|
| प्र. पु. | श्वसिमि | श्वसिवः | श्वसिमः | अश्वसम् | अश्वसिव | अश्वसिम |
| द्वि. पु. | श्वसिषि | श्वसिथः | श्वसिथ | अश्वसः / अश्वसीः | अश्वसितम् | अश्वसित |
| तृ. पु. | श्वसिति | श्वसितः | श्वसन्ति | अश्वसत / अश्वसीत | अश्वसिताम् | अश्वसन् |

* In like manner are conjugated स्वप् (to sleep), अन् (to breathe) and जक्ष् (to eat); the 3rd person plural termination loses its न् when applied to जक्ष् (जक्षति–अजक्षुः–जक्षतु).

